कृष्णदास संस्कृत सीरीज
२
**

॥ श्री ॥

# अष्टादशपुराणपरिचयः

## ( पौराणिकप्रभापरिशीलनम् )

लेखक
डॉ० श्रीकृष्णमणित्रिपाठी
( आचाय, एम० ए, पी० एच् डी०, डी०, लिट् )
वाराणसेय-सम्पूर्णानन्द-सस्कृत-विश्वविद्यालयस्य
प्राक प्राध्यापक , विभागाध्यक्षश्च
( पुराणेतिहास-सस्कृति-भूगोलविभागे )




सम्पादक
डॉ० श्रीपति अवस्थी
( एम० ए०, पुराणेतिहासाचार्य )
सहायक निदेशक –उत्तर प्रदेश सस्कृत अकादमी,
रायलहोटल, लखनऊ ।

चौखम्बा सरस्वतीभवन, वाराणसी
१९८०

# विषय-सूची

| विषया | पृष्ठाङ्का |
|---|---|

| विषया | पृष्ठाङ्का |
|---|---|
| अजपाजपविधि | १८८ |
| धर्ममीमांसायां पुराणानां प्रामाण्यम् | १८९ |
| विनियोगज्ञानाय पुराणज्ञानस्यानिवार्यता | १९१ |
| जीवस्य क्रमिकविकासविवेचनम् | ,, |
| पुराणेषु योगसिद्धिमहिम्नो वर्णनविमर्श | २०४ |
| भारतीयवाङ्मये व्रतोत्सव-प्रचलनविमर्श | २१८ |
| विद्यादानस्यापूर्वो महिमा | २२३ |
| लेखकस्य वंशपरम्परा परिचय | २२४ |

# प्राक्कथनम्

यत्पादपद्ममनिशं प्रणिपत्य भक्त्या
भक्ता भवन्ति भुवने परिपूर्णकामाः ।
कन्दर्पकोटि - शतमोहनमद्भुतं तं
राधापतिं सकललोकगुरुं नमामि ॥

भारतीया संस्कृतिर्हि श्रुति-स्मृति-पुराणानामाश्रयेणाद्य यावत् प्रचलति । अनेकशाखाभिर्विभक्तेषु चतुर्षु वेदेषु बहुसंख्याकासु, स्मृतिषु ब्रह्मपुराणाद्यष्टादश पुराणेषु च तस्याः संस्कृतेः स्वरूपं सर्वश्रेष्ठमेकरूपमेवोपलभ्यते । यद्यपि चतुर्षु युगपरम्परासु व्यतीतासु भारतीयाचारविचार व्यवहाराणामेकविधत्वमिवाभाति तथापि न तत्तादृशं यत् सर्वथा वेदादिप्रोक्ताचारविचारात् संविदेत् । वेदेषु यद् भारतीयाचार विचार व्यवहार-स्वरूपं संक्षेपतः उपलभ्यते । तत् स्मृतिषु विस्तृतं पुराणेषु च कथनोपकथनद्वारा ततो विस्तृतं दृश्यते, किन्तु सर्वत्र पुष्प-मालायां सूत्रमिव वैदिकं स्वरूपमनुस्यूतमेव दरीदृश्यते । सृष्टिकालतोऽद्य यावद् भारतीया यत्र कुत्रापि वसन्तो यद् धार्मिकं कृत्यमनुतिष्ठन्ति तत्र सङ्कल्पे श्रुति-स्मृति पुराणोक्तफलप्राप्तये तत्तत् कृत्यं करिष्ये इत्युच्चारयन्त्येव । अनेन प्रबन्धकेन श्रुति स्मृति-पुराणेषु सर्वेषां मानवानां बद्धश्रद्धत्वं प्रतिभाति ।

पुराणानामाश्रयेणैव मानवजीवनस्योन्नतिकरा विशिष्टाः प्रकाराः, धार्मिक, समाजिक - सांस्कृतिक - राजनीतिकोन्नायकाः विचाराः, पञ्चदेवोपासनानां निरूपणम्, जीवस्येतिकर्तव्यता, परमेश्वरस्य सर्वत्रैकरूपता, सत्कर्मद्वारा लौकिकपारलौकिक सुखसाधनमित्यादयो बहवो विषयाः पुराणद्वारैव मनुष्याः सरलतया सुखेन च ज्ञातुं शक्नुवन्ति । पुराणैरस्पृष्टं किमपि विचारजातं मानवानां समुन्नतये नावशिष्टमिति कथने नात्युक्तिदोषस्पर्शमपीति । भगवतो विष्णोरंशेनावतीर्णो भगवान् वेदव्यासः । वेदार्थविस्ताराय पृथिव्यां पुराणानि कृतवान् । तदुक्तं महाभारते इतिहास-पुराणाभ्यां वेदार्थमुपबृंहयेत् ।

लोकोपकारनिरतेन महर्षिणा वेदव्यासेन अष्टादशपुराणानि निर्माय स्वपुत्राय श्रीशुकदेवमुनये रोमहर्षणाय च शिष्याय उपदिष्टानि। अमलात्मा शुकदेवमुनि महान् ब्रह्मज्ञानी, रोमहर्षणसूतश्च परमप्रवीण पुराणवक्ताऽसीदिति पुराणानामनुशीलनेनानुमीयते—

लोमानि हर्षणीं चक्रे श्रोतृणा यत् सुभाषितै ।
कमणा प्रथितस्तेन लोकेऽस्मिन् लोमहर्षण ॥ १।१।१३

आनन्दकन्द सच्चिदानन्दो गोप-गोपीजनवल्लभो भक्तवत्सल पूर्णावतारो भगवान् श्रीकृष्णो दिव्यमाध्यात्मिक चक्षु प्रयच्छन् अनन्ये भक्त कुन्तीपुत्रमजुन यद् विश्वरूपमदर्शयत् तद् भगवता सत्यवत्यङ्गजन्मना वेदव्यासेन पुराणात्मना आबालवृद्ध स्त्री पुरुषाणा कृते सुलभ चकार, यतो वै विश्वदर्शनात्मकस्य महाभारतस्यारम्भे कुरुक्षेत्रस्य पुण्यभूमौ पुराणशास्त्रशरीरे ब्रह्मा, विष्णु, महेश, दक्ष, कुबेर, वरुण, वायु, अग्नि, इन्द्र, शैला, सरित, समुद्रा, वन, ग्रह नक्षत्राणि, मनुष्या, देवा, दैत्या, गन्धर्वा किन्नरा, यक्षा, पिशाचा, राक्षसा, नागा, सप्तद्वीपा, मनव, तपस्विगणा, आकाश, पृथिवीत्यादय सर्वे किल विवर्णिता दरीदृश्यन्ते। विश्वस्मिन्नस्मिन् नैतादृक् तत्त्वज्ञानमस्ति यत् किल भगवता वेदव्यासेन विरचिते पुराणसाहित्ये न वर्णित भवेत्। अत एवोक्त महाभारतस्यादिपर्वणि—यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्। तस्मादेव सदसद्विवेकिनो महापुरुषा कथयन्ति यद् व्यासोच्छिष्ट जगत् सर्वम्।

पुराणवाङ्मये देवी-देवताना नानाविधा गाथा गीयन्ते। ऋषि मुनि-देवर्षि महर्षीणा चारुचरित्र चर्चितमस्ति, पातिव्रत्यपरायणाना सतीनारीणा मादर्शजनक पूत चरित्र चर्चितमस्ति, पुण्यश्लोकाना लोकोत्तरचरित्राणा महापुरुषाणा जीवनचरित च गुम्फितमस्ति। तत्र क्रमबद्धप्राचीनेतिहास काव्य-राजनीति समाजनीति -आध्यात्मज्ञान - व्यवहारज्ञान - सामाजिकार्थिकधार्मिकादिव्यवस्था, सर्वविधा विद्या विद्यन्ते। पुराणसाहित्यमेतादृक् परिपूर्णं साहित्यमास्ते येन सामान्यवर्गप्राणिन आरभ्य परमोच्चतमान् आदर्शमहापुरुषान् यावत् सर्वेषा यथाधिकार वास्तविको लाभो भवितुमर्हति।

पुराणाना भाषा नितान्त सुबोधा, सरला, सुगमा, मनोहारिणी, प्राञ्जलाऽतिमञ्जुला च वर्तते। तत्र वर्णित तत्त्वज्ञान सातिशय सुगम मनोहर चास्ति। प्रसादगुणपूर्ण पुराणसाहित्य पठतो मानवस्य न तत्र कदाचिद्विरसता जायते पर त्वुत्तरोत्तरमभिरुचिरेव जायते एव।

नैकश पठितेऽपि पुराणसाहित्ये उत्तरोत्तरमभिरुचिवद्धत एव, चित्ते ततो नारुचिरुदेति। चिन्ताशीलैर्विचारकैर्निर्विवाद मन्यते यदन्येषा काव्यादीनामेकवार द्विवार वा अध्ययनेन पुन पठितु पाठकाना चित्त नोत्कण्ठते, किन्तु न जाने पुराणसाहित्ये कीदृगलौकिकत्व विद्यते यद् यावद्वार पुराणाना, पाठो विधीयते तावदेवाधिकमेतेषा माधुर्यमेधमान पाठकाना मनासि मोहत्येव। पर सहस्रवर्षेभ्योऽपि कालेभ्यो जना पुराणपाठ प्रकुर्वते, अपिचैकव्यक्तिरेव बहुवार पुराणजातमधीते, शृणोति च अथापि तस्य तत्र दैनन्दिन मभिरुचिर्विवद्ध त एव। सदा पल्लविता कल्पलतिकेव प्राचीनोऽपि पुराणराशि नवीन एव प्रतिभाति नैव पुराणत्वमुपगच्छति। पुराणाना सर्वग्राहकत्व सर्वव्यापकत्व सकललोकोपकारकत्व च अनुपममेवास्ति। पुरातनस्य वैदिकसनातन धर्मस्य श्रुति स्मृति पुराणमिति त्रिविध प्रामाणिक पुस्तकमभिधीयते। तत्र च सर्वे श्रद्धा कुर्वन्ति। तत्र श्रुतीना परब्रह्मण परमात्मन साक्षान्निश्वासभूतत्वात्तासा रहस्य वास्तविक मर्म वा, न सर्वैं सहसाऽवग तु शक्यम्। वेदपुरुषा एव वेदान् सम्यग ज्ञातु प्रभवन्ति येषा महात्मनामन्त करणेषु सर्वज्ञानमयो वेद पुरुषरूपेण विराजते। त एव वन्द्या वेदार्थाना यथार्थमर्थमवगन्तुमीशते, न साधारणा अपि। पूज्यपादा दिव्यज्ञानसम्पन्ना अस्माक पूर्वजा ऋषयो महर्षयो वा वेदाश्रयाद् विधि-निषेधात्मकवाक्यैर्मर्मस्वरूप यत् स्मृतवन्त, तत् स्मृतय प्रोच्यन्ते। सर्वा एता विधि-निषेधात्मकतया दुर्बोधत्वेन जटिलत्वमापद्य त, तासामपि रहस्य त एवाधिकारसम्पन्ना महापुरुषा एवावगच्छेयु यै धर्मस्य यथार्थ स्वरूप सम्यगवबुध्यते, पौराणिकी वार्ता तु न तथा। पुराणेषु तत्त्वज्ञानै सह मनोरञ्जक कथोपकथनोपाख्यानाख्यानरोचकतासद्भावात् पुराणग्रन्था सर्वविधानामधिकारिणा चित्तान्याकर्षयन्त्येवेति तेषामस्ति वास्तविक स्वारस्यमपूर्वत्वमननुभूतत्वञ्च।

यदि बालवृन्द पुराण पठेत् तदा तस्य सौजन्यसमृद्धिपूर्वक भाविजीवनस्य पुण्यमय पन्था प्रशस्तो भवेत् । यदि प्रौढा पुरुषा पुराणशास्त्रस्य स्वाध्याय कुर्वीरन् तर्हि तेषा पुरुषार्थकर्तव्यनिष्ठा निश्चप्रच विवर्द्धेत । वृद्धाश्च परलोकप्राप्तिपूर्वक परमात्मान प्राप्य कृतकृत्या भवेयु स्व मानवजीवन च सफल विदधीरन् । पुराणाना पाठप्रभावाद् भारतीयाना नराणा नारीणाञ्च जीवनमादर्शमय स्यात् । पुराणाना प्रभावात् स्त्रीणा सद्गृहिणीधर्मस्योदयेन पातिव्रत्यधर्मो दृढमूलो भवेत् तासा पुत्राणा पतीना च जीवन साधु प्रचलेत् ।

पुराणेषु ये राजनीते सिद्धान्ता उपवर्णितास्ते त्रिकालेऽपि अबाधिता सन्ति । यदि विश्वस्य सामाजिक विज्ञान परिशील्येत तर्हि पुराणेष्वपि तद् यत्र कुत्रापि व्यासकृपयाऽवश्य प्राप्येत । आदर्शमयसामाजिकव्यवस्थार्थं पुराणेषु महान् प्रयास कृतोऽस्ति । पुराणातिरिक्त कुत्रापि सर्वजनोपकारि विवेचन सम्यग् दुर्लभमस्ति ।

अध्यात्मज्ञानै परिपूर्णानि पुराणानि विविधज्ञानमयाना वेदाना भाष्यभूतानि सन्तीत्यत्र न कस्याप्यस्ति विचिकित्सा । त्रिकालदर्शिना महर्षिणा कृष्णद्वैपायनेन भगवता वेदव्यासेन सासारिकदु खान्यनुभूय निश्चित च मानवजीवनस्य प्रमुख लक्ष्य भगवत्प्राप्ति । तज्ज्ञानमन्तरा नात्यन्तिकसुखलाभो भवितुमर्हति । सर्वे च मानवा सुखार्थमेव प्रवृत्ता दरीदृश्यन्ते, न दु खार्थं कश्चिदपि विवेकी मानव चेष्टते । सर्वोऽपि मानवो निरन्तर सुखार्थमेव यतते । तदुक्त - महाभारतस्य शान्तिपर्वणि—

दु खादुद्विजते जन्तु सर्वस्य सुखमीप्सितम् ।

गरुडपुराणस्य प्रेतकल्पेऽप्युक्तमस्ति—

इच्छति शती सहस्र सहस्री लक्षमीहते ।
लक्षाधिपश्च साम्राज्य सर्वस्य सुखमीप्सितम् ।

भारतवासिभिर्महर्षिभिर्निसर्गतो नि श्रेयसमेवान्तिम लक्ष्यमाम्नातम्, येन जायते शाश्वतिकं निरतिशय च सुखम् । एष पुराणानामेव महिमा वर्तते । पृथिव्यामस्यामन्ये मनुष्या लौकिकमभ्युदयमेवोपेत्य मदगर्विता प्रमत्ता वा

सन्तो नित्य नश्यन्ति, अश्यन्ति, किन्तु भारतीया आर्याश्चिरकालात् स्वकीय स्वरूप यद्रक्षन्ति तत् पुराणानामेव महिमा । ऐहिकपारलोकिकाभ्युदयस्य तदन्ते नि श्रेयस सप्राप्तेश्च यदि किमपि सुलभ साधन स्यात्तत् पुराणशास्त्राव लम्बनमेवास्ते । पुराण समुद्रवदेवास्माकमुपकरोति । पुराणसागरमन्थनाद् हालाहल गरलमेव नि सरति, अमरकारकममृतमपि प्राप्यते । एव तत सुरापि नि सरति सुधाशुरपि समुद्भवेत् । त्रिलोकलक्ष्या लक्ष्मी मधुरध्वनिकारक सुखकर शङ्खोऽपि निर्गच्छति, किन्तु पुराणसाहित्यस्य पाठकैर्नू नमिदमवधेय यत् पुराणपयोधिविलोडनेन न केवल सुरा, गरल हालाहल वा प्रयाति, किन्तु सुधा, सुधाशु , कक्ष्मीरेव ततो नून प्राप्यते । पुराणमहत्त्वमुग्धेन महर्षिणा वेद-व्यासेन स्फुटमुद्घोषित पुराणाना वेदानुग्राहकत्व महाभारतस्यादिपर्वणि—'

इतिहासपुराणाभ्या वेदार्थमुपबृहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामय प्रहरिष्यति ॥

एव सवत्र सस्तुतस्य पुराणस्य महिमान केन यथाथ वक्तु शक्यम् ।

स्कन्दपुराणस्य रेवाखण्डे तु श्रुति स्मृती ब्राह्मणाना नेत्रसमे प्रोक्ते स्त । तथा पुराण हृदय निगदितमस्ति । तत्रैकेन रहितो मनुष्य काणा कथ्यते, द्वाभ्या-हीन अन्धो निगद्यते, पर पुराणशून्यस्तु हृदयशून्यो भवति । अत श्रुति-स्मृति-पुराणानि विपश्चिता नेत्राणि प्रोक्तानि सन्ति । तथाहि—

श्रुतिस्मृती उभे नेत्रे पुराण हृदय स्मृतम् ।
एकेन हीन काण स्याद् द्वाभ्यामन्ध प्रकीर्तित ॥

अपि च तत्रैव पुन

श्रुति स्मृति पुराणानि विदुषा लोचनत्रयम् ।
यस्त्रिभिर्नयनै पश्येत् सोऽशो माहेश्वरो मत ॥

अत एव नारदीयपुराणे पुराणानां कृते वेदेभ्योऽप्यधिकतरा मान्यता प्रदत्तास्ति—

वेदार्थादधिक मन्ये पुराणार्थं वरानने ।
वेदा' प्रतिष्ठिता सर्वे पुराणे नात्र सशय ॥ २।२४।२७

यो हि वेदविभाजयिता भगवान् व्यास , स एव पुराणाना च कर्त्तास्ति तेन वेदविषयजात यत्र तत्र पुराणेषु निहितोऽस्ति । अत एव साम्प्रत समस्तस्य वेदस्यानुपलब्धादपि तत्प्रतिपाद्यो विषय पुराणेषु कथनोपकथनाख्यानोपाख्यान दिमुखेन प्राप्यते एव । अत एव स्कन्दपुराणस्य प्रभासखण्डे पुराणसाहित्य सर्व-शास्त्रमयमुक्तमस्ति—

पुराणमखिल तात ! सवशास्त्रमय स्मृतम् । ७।१।१४

यथेदमाश्चयमय विश्व भगवतो नारायणादेवोत्पन्न तथैव समस्त वाङ-मय पुराणादेव प्रकाशितमस्ति । वस्तुतोऽस्माक सविधे श्रुति-स्मृति पुराणान्येवे-तादृश साधन वर्तते यतोऽस्माभि स्वपूर्वजाना यथार्थ ज्ञान सम्पद्यते । एषु भारतीयसस्कृतेर्वास्तविक स्वरूप पर्याप्तमात्राया प्रतिबिम्बित विद्यते । अतो भारतीयसस्कृतेर्वास्तविकस्वरूपज्ञानाय पुराणानामनुशीलन निता तमुपकारि उपादेय श्रद्धेय चास्ति ।

नह्यविदितचरमस्ति केषाञ्चिदपि विपश्चिता यज जगदिदानी यदभिमुख दृश्यते तद आगभिन्या विभीषिकातो रक्षितुमल चेत् किञ्चिदस्ति तर्हि सा भारतीया सस्कृतिरेव । भारतीयाया सस्कृते सम्यगनुशीलनार्थ वेदमूलक स्मृति-पुराण महाभारत-तन्त्रशास्त्राणा समीक्षणमत्यावश्यकमस्ति । पुराणमहोद धावगाहननिपुणतायै श्रुति-स्मृत्यनुकूलत्वानुसरण नितान्तमावश्यकम् । अत एव सकलशास्त्रनिष्णातै सहृदयै सूरिभिर्वेदाध्ययने एव वल प्रदत्तम् । तथाहि पशपशाह्निके महाभाष्ये भगवान् पतञ्जलि—'ब्राह्मणेन निष्कारण षडङ्गो वेदो ध्येयो ज्ञेयश्च ।'

मानवजीवने ये ये प्रसङ्गा उपतिष्ठन्ते, तेषा मागप्रदशनस्य क्षमता वैदिकविचारधाराया एक वैशिष्ट्य विद्यतेतराम । वेद स्मृत्योरनन्तर पुराणा नामेवव ास्तविक जगति प्रामाण्यमङ्गीक्रियते । अतोऽत्र वेदाथमेव स्पष्टीकर्तुं ज्ञान-कर्मोपासनाना सिद्धा ता अतिसरलया भावगम्यया प्राञ्जलसस्कृतभाषया विविधा भिमक्तशिरोमणीना मानवमणीना कथाभि सम्यगववोधिता सन्ति, येषा सिद्धा-ताना । मननद्वारा साधारणबुद्धयोऽपि जना व्यावहारिकी सास्कृतिकी धार्मिकी

च स्थिति सम्पादयन्तो वेदोपनिषादिप्रतिप्राद्य मानवाना प्रधान लक्ष्य परमात्मान प्राप्य ससारसागरादस्मादुत्तर्तु प्रभवन्ति। अपौरुषेयानामनादि वेदाना विस्ताराय पुराणसाहित्यस्यावश्यकतामनुभूय पराशरमुने सत्यवत्यङ्गजन्मा महर्षिर्वेदव्यासोऽष्टादश महापुराणानि रचितकान् कृतवांश्च तत्र ज्ञानकर्मोपासना-पेक्षया ऋजुभिरुपायै र्मानवमात्रस्याचरणीयभक्तिमार्गस्याविष्कारम्। अतो निखिलाना जनाना कल्याणकारिभिरुपायै परिपूर्णाना पुराणाना सम्यगनु-शीलनेन भवति मानवताया जागर्ति, वेदस्योपवृहणञ्च, सम्यक सञ्जायते सनातनस्य धर्मस्य सरक्षणम्, मानवजन्मन साफल्यञ्च सिध्यति।

तथाचोक्त पुराणार्णवे—

> विस्ताराय च वेदाना स्वय नारायण प्रभु।
> व्यासरूपेण कृतवान पुराणानि महीतले॥ ५।७

यथा दिवसे प्रकाशो भवति भगवता भास्करेण, रात्रौ प्रकाशश्च चन्द्रमसा जायते, गृहान्धकारश्च प्रदीपेनापनीयते तथैव परमात्मस्वरूपप्रदर्शनार्थमुपयुक्त ज्ञानं तु पुराणवचनैरेव भवितुमर्हति। विविधाभिर्लोकवासनाभिर्भूयो भूयो भवाटव्यामस्या बम्भ्रम्यमाणाना जीवाना कृते पुराणमस्ति सरल आलोक-मार्गं। अत एव लोकपितामहेन ब्रह्मदेवेन सर्वासा विद्यानामादौ पुराणविद्यैव स्मृता, तदनन्तर च तस्य मुखेभ्यो वेदा आविर्भूता।

तदुक्त मत्स्यपुराणे—

> पुराण सर्वशास्त्राणा प्रथम ब्रह्मणा स्मृतम्।
> अनन्तर च वक्त्रेभ्या वेदास्तस्य विनिर्गता॥ ५३।३

अत एव सर्वशास्त्राणा ज्ञाने सत्यऽपि पुराणज्ञानाभावात् कस्यापि पुरुषस्य विचक्षणत्व न सम्मतीति विष्णुपुराणस्यास्ति डिण्डिमघोष —

> यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विज।
> न चेत् पुराण सविद्यान्नैव स स्याद्विचक्षण॥ २।५१

पद्मपुराणेऽपि प्रोक्तमस्ति यद् यैर्वेदास्तदितराणि च शास्त्राणि सम्यगधी-तानि, किन्तु तैर्यदि पुराणानामध्ययन न कृत चेत्तर्हि तेषामुत्तमज्ञानप्राप्तिर्न जायते। तदुक्तम्—

बहुशास्त्रं समभ्यस्य बहून् वेदान् सविस्तरम् ।
पुंसोऽश्रुतपुराणस्य न सम्यग् याति दर्शनम् ॥
४।१०५।१३

धार्मिकसन्देहानां निवृत्तये प्रवृत्तये चाध्यात्मिकपरलोकमार्गे पुराणानां परिशीलनं नितान्तमावश्यम्। इदं हि विरुद्धैर्हेतुभिर्न हातव्यम् ।

शास्त्रेषु अप्रतर्क्यपुराण मानवधर्मशास्त्र साङ्गवेद चिकित्सासु पुराण-साहित्यस्यैव सर्वप्रथमं नाम निर्दिष्टं महाभारतस्यानुशासनपर्वणि, यतो हीमानि भगवत आज्ञारूपाणि सन्ति—

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः ॥

पुराणं मानवजातेर्हृदयान्धकारस्यापसारणाय सर्वथा मणिमयं प्रकाश-कमस्ति। परमतत्त्वदृष्ट्या पुराणं हि नूनमस्ति श्रद्धेयं शास्त्रम् । पुराणेषु विविधैर्भावैर्विभिन्नैर्नामभिर्विविधेभ्योऽधिकारिभ्यो विविधैः प्रकारैः परमपुरुषार्थमवभोक्तुमुपायाः प्रदर्शिताः सन्ति। अद्यत्वे पुराणानां सम्यग् ज्ञानाभावादेव तत्र निर्मूला अनेके आक्षेपा भवन्ति । गभीरतया तदनुसन्धाने क्रियमाणे तेषामाक्षेपाणामनायासेन निराकरणं जायते। यदि पुराणान्याक्षेपपूर्णानि स्युः तर्हि महादार्शनिकानां परमतत्त्वविचारकाणां कुमारिलभट्ट—स्वामीशङ्कराचार्य-रामानुजाचार्य वल्लभाचार्यप्रभृतीनामाचार्यवर्याणां महानुभावानां पुराणानि निर्भ्रान्तिप्रमाणानि कथङ्कारं स्वीकृतानि स्युः ?

पुराणानामन्तस्तले प्रविश्य विवेचने क्रियमाणे स्फुटमवगम्यते यत् पुराणेषु देश काल-परिस्थित्यनुसारं सर्वानुकूलं कर्तव्यमुपदिष्टं वर्तते, येन मानवानां सर्वथा कल्याणमेव स्यात् । अतः पुराणपारायणपरैर्विद्वद्भिर्भारतीयजनानां महते उपकाराय भारतराष्ट्रसमुन्नतये च पुराणज्ञानराशिः प्रचारणीयः प्रसारणीयश्च। अद्यत्वे स्वतन्त्रताया उषःकाले नित्यनवीनैरुत्साहैरभिनवचाकचिक्ययुगेऽपि पुराणानि महान्तमुपकारं कर्तुं प्रभवन्ति । भारतीय-जनता-पथ-प्रदर्शनाय पुराणानि महाभारतं रामायणञ्च सर्वतोऽधिकं सर्वविधं साहाय्यं विधातुं

शक्नुवन्ति, यतो हि पुराणानां भूमिर्न केवलं भारतवर्षमात्रं वर्तते, अपितु समस्तं भूमण्डलं वर्तते । पुराणव्यवस्थायां विश्ववन्धुत्वस्य सार्वभौमस्य चादर्शो निहितोऽस्ति येनान्ताराष्ट्रीयसमस्यायाः समाधाने पर्याप्तं साहाय्यं भवितुमर्हति ।

लौकिकविषयाणामिव पारलौकिकविषयाणामपि पुराणेषु प्रचुरं विवेचनं कृतं विद्यते, यतो हि पुराणानां दृष्टिपथे न केवलं दृश्यमानं भूमण्डलस्यैवापितु ऊर्ध्वाधोभागे विद्यमानानां चतुर्दशभुवनानां पदार्था अपि सम्यग् विवेचिताः सन्ति । एवं सार्वजनीनं हितमुपदेष्टुं प्रवृत्तानां पुराणानां समीक्षा कस्य सचेतसो मानवस्य न प्रियकरी कल्याणविधायिनी च स्यात् ?

पुराणं हिन्दुजातेः सर्वस्वं, भारतीयसंस्कृतेः पोषकं, मानवसमाजस्य पथप्रदर्शकं साहित्यस्य चाधारस्तम्भो वर्तते, तेन सर्वविधं धार्मिकं नैतिकं-सामाजिकं सद्व्यवहारादीनां सौविध्यमवाप्यते । भारतीयप्राचीनेतिहासस्यान्धकारयुगेऽपि पुराणप्रभया प्रकाशः प्राप्यत एव । अत एव महर्षिणा योगिना याज्ञवल्क्येन याज्ञवल्क्यस्मृतौ चतुर्दशविद्यागणनायां पुराणस्य प्राथम्यमुक्तं —

पुराणं न्याय मीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ३।१

भूगोलस्य शिक्षार्थमपि पुराणमनुशीलनमत्यावश्यकम्, भौगोलिकदृष्टया मिश्रदेशस्य प्रसिद्धायां नीलनद्याः तदेव स्थानमस्ति यद् भारते भागीरथ्याः गङ्गायाः वर्तते । एकदा तस्याः उद्गमस्थानजिज्ञासया विल्फोर्डमहोदयेन पुराणवर्णितस्य भूगोलस्याधारेणान्वेषणं समारब्धम् । तेन पुराणवर्णनानुसारं नीलनद्याः उद्गमस्यैकं मानचित्रं प्रकाशितम्, किन्तु कनिंघमप्रभृतयो योरोपीया विद्वांसो भारतीयपुराणसाहित्यस्य तद्गौरवमसहमाना विल्फोर्डं हसन्तः तन्निर्मितं नीलनदीमानचित्रं सर्वथाऽविश्वसनीयं भारतपक्षपातपूर्णञ्चोद्घोष्य खण्डितवन्तः । तदनन्तरं वास्तविकतापक्षपातिना लेफ्टिनेन्ट जी० एच० स्पीकेन नीलनद्या उद्गमस्थानविषये परिश्रमः आरब्धः । तेन विचारजातमनु-

शील्य विल्फोडमानचित्र गृहीत्वा मिश्रे भ्रमता तन्मानचित्राधारेणैव यात्रां कुर्वता नीलनद्याउद्‌गमस्थान प्रत्यक्षीकृतम्। सवमेतद्‌वृत्त 'डिस्कभरी आफ् दी सोर्स नीलनदी' नामके पुस्तकेऽङ्कितमस्ति । अस्यैव विषयस्य विवरणम् 'एसियाटिक रिसर्चेज तृतीयभागेऽपि प्रकाशितमस्ति । एवविधा अनेके सन्दर्भा पुराणभौगोलिकविवरणाना । प्रमाणिकता साधयन्ति । पुराणेषु प्रधानतया भारतवर्षस्य गौडतया च अन्येषा देशानामपि किञ्चिद् विवरण निर्दिष्ट-मस्ति, परमिदानी दीर्घकालस्य व्यवधानात्, प्रकृतिपरिवर्तनात्, अनेकप्रांते, राजनीतिविप्लवाच्च आंशिकरूपेण पुराणनिर्दिष्टाना स्थान पर्वत जनपद नदीना यथार्थत परिचयोऽद्यत्वेऽतिकठिनो जात । प्रसन्नताया विषयोऽस्ति यत् पुरातत्त्वानुशीलननिरताना गवेषकाणा परिश्रमेण पुराणवर्णितभौगोलिक-विवरणसत्यता शनै॰ शनै प्रमाणी भवति ।

पुराणाना धार्मिकदृष्ट्याऽधिक महत्त्व विद्यते । वेदविहिताना धर्माणा सरलसुबोधभावगम्यया भाषया भगवता व्यासेन विरचितानि। वेदानामतिदुरूहतया तदुक्ता अर्था विषयाश्च सहसा लोकाना बुद्धौ नाधिरोढु प्रवृत्ता । अतो वेदोक्तार्थस्य सम्यग् ज्ञानाय पुराणानि विरचितानि । अत एवोक्त महाभार-तस्यादिपर्वणि—

इतिहास पुराणाभ्या वेदार्थमुपबृ हयेत् ।

विश्ववाङ्मये वेदाना स्थानमप्रतिम विद्यते । लौकिक पारलौकिको वा कश्चन विषय एवविधो नास्ति, यस्य विवेचन वेदेषु येन केनापि प्रकारेण न कृतमस्ति । अतो वैदिकरहस्यस्य यथार्थज्ञाननिमित त न्मूलकपुराणाना पर्या-लोचनमत्यन्तमुपकारि वर्तते । वेदेषु अतिसक्षिप्तरूपेण वर्णिताना विषयाणामेव पुराणेषु आख्यानोपाख्यानकथानकादिषु विशदीकरण वर्तते

प्राचीनतमस्य भारतस्यादर्शभारतीयसस्कृतेश्च सर्वोपकारक वास्तविक स्वरूपमवगन्तु पुराणमेवैक सरल साधनमस्ति । अत एव पुराण भारतीय वाङ्मय मन्दिरस्य सुवर्णमय कलश कथ्यते । पुराणेषु प्रसङ्गवशात् स्थले स्थलेऽखिललोककल्याणकारिण्या भारतीय सस्कृते मौलिकाना सिद्धान्ताना

स्पष्टमुल्लेखो विद्यते, वेदस्य च साङ्गोपाङ्ग विवेचनमुपलभ्यते। अतो भारतीयाना व्यक्तिगता समाजिकी सास्कृतिकी च जीवनधारा सम्यगव तु पुराण-साहित्य सर्वाधिक सहायकमस्ति। वस्तुतो भारतीयसस्कृते रूपरेखा पुराणेष्वेव सुरक्षिता वतते। पुराणेषु कम भक्ति ज्ञानोपासानादिद्वारा मानवज मन प्रधानलक्ष्यभूताया भगवत्प्राप्ते साधन, सदाचार, सृष्टेरादिकालत पूवजाना विवरण, लोककल्याणनिरताना मुनीनामृषीणाञ्च पवित्रतममाचरण तथाऽदशभूतानामुदारहृदयाना महापुरुषाणामुज्ज्वल चरित्र च चित्रितमस्ति। यदाधारेण सर्वोऽपि जनो नैज जीवन समुन्नतिशील विधातु शक्नोति।

एव भारतीयजीवनस्य प्रतिबिम्बदशनात् पुराणेषु देशस्यास्य साहित्य-सस्कृत्योर्वास्तविक स्वरूपमुलभ्यते। पुराणाना समस्त वृत्तान्त भारतीयसस्कृते प्रतिनिधित्व करोति। व्यावहारिकजीवनेन सह सम्बद्धाया भारतीयसस्कृतेर विकृतरूपोपस्थापन पुराणाना परम वैशिष्ट्य वतते।

पुराणेषु मानवीयजीवनस्य प्रतिबिम्बदशनात् तथा राष्ट्रियसमुन्नते-रुदन्त उत्साहो निहितोऽस्ति। दैशिक राष्ट्रिय-सामाजिक सास्कृतिक चेतनाया समाजहितभावनया मनोरञ्जकरुच्या च प्रेरितो भगवान् वेदव्यास पुराणाना प्रणयन विधायास्माकमैहिक्या पारलौकिक्याश्च समुन्नते साधन सुगम कृतवान्। पुराणानुसार जीवननिर्वाहाथ हि दुसमाज सदा जागरूक तिष्ठति। पुराणसाहित्य भारतीयसामाजिकजीवनस्यास्ति स्वच्छ दपणम्। सरल-सुबोध-प्रबुद्ध प्राञ्जल शैलीद्वारा अतिप्राचीन सदपि पुराणसाहित्य नित्य-नवीनताया स्फूर्तेरुत्पादने महदुपकारि साहित्य वर्त्तते। स्वकीयै विशुद्धै सदुपदेशै समाज शुद्ध विधाय सत्य शिव सुन्दरमादर्शमुपस्थापयति पुराण साहित्यमिति निश्चप्रचम्।

अत एव वेदाना मर्म विज्ञातु पुराणानामनुशीलनेऽस्माक पूवजैर्महद्बल प्रदत्त वतते। यावत् पुराणानामध्ययन न क्रियते तावद् भारतीयमध्ययन न्यूनतापूर्णमेवावतिष्ठते।

वस्तुत पुराणेषु धम दशन भक्ति कला इतिहास भूगोल राजनीति-समाजव्यवस्थादिविभिन्नविषयिका सामग्र्य सङ्कलिता सन्ति । येषा विवेचन भारतीयेतिहासस्य नवनिर्माणेऽत्य तमुपादेयमस्ति । स्कन्दपुराणस्य रेवाखण्डे तु वेदविद्या, पुराण धमशास्त्रञ्चेति त्रय सवशास्त्रविनिर्णये प्रमुख स्वीकृतमस्ति । पुराणञ्च पञ्चमो वेदोऽभिमत ।

आत्मनो वेदविद्या च ईश्वरेण विनिर्मिता ।
शौनकीया च पौराणी धर्मशास्त्रात्मिका त्रय ॥
तिस्रो विद्या इमा मुख्या सवशास्त्रार्थनिर्णये ।
पुराण पञ्चमो वेद इति ब्रह्मानुशासनम् ॥ १।१७ १८

अत पुराणसाहित्य भारतीयजीवनस्याधार सास्कृतिकस्येतिहासस्य च शृङखला मत्वा तदनुशीलन नितान्तमावश्यकम् । पुराणवाङ्मय भारतीय-जीवनस्य साहित्यस्य च अस्ति अमूल्य रत्न तथाऽतीत वतमानेन सह सयो-जयितु स्वणमयी शृङ्खला । विश्वसाहित्याक्षयभाण्डारोऽष्टादशमहापुराणानि अनुपमानि श्रेष्ठरत्नानि सन्ति । इमानि चास्माक सामाजिक सास्कृतिक-राज-नीतिक-धार्मिक दाशनिकजीवन स्वच्छदपणवत् प्रतिबिम्बित कुवन्ति । सदैव क्रमबद्धकथानकशैल्या निर तर नवीना स्फूर्ति सञ्चारयन्ति । समाजस्य-तात्कालिकस्वरूपबोधनाय पुराणाना महानुपयोग । पुराणेषु प्राचीन भारतस्येतिहासो निहितोऽस्ति । पौराणिकेतिवृत्ताना प्रामाणिकत्वमद्यत्वे शिलालेखो-त्खनने प्राप्तसामग्रीभिरपि कर्तुमारब्धम् । अतो विदेशीया अपि विद्वास पुराणसाहित्ये बद्धादरा दरीदृश्य तेतराम् ।

## पुराणाना परिचय

ससारस्य सृष्टिमारभ्य प्रलयपयन्त समस्तस्य विश्वस्य क्रमबद्धेतिहासनिर्दे-शकाना भारतीयसस्कृते प्रतीकाना वैदिकस्य सनातनधमस्य परम्परायाश्च परिपोषकाणामष्टादशपुराणाना परिचयप्रसङ्गे महर्षिणा वेदव्यासेन विष्णु-

पुराणस्य तृतीयेंऽशे पुराणाना नामक्रमश्चैव प्रतिपादितोऽस्ति। तत्र ( १ ) प्रथम ब्रह्मपुराणम्। ( २ ) द्वितीय पद्मपुराणम् ( ३ ) तृतीय विष्णुपुराणम् ( ४ ) चतुर्थं शिवपुराणम् ( ५ ) पञ्चम भागवतपुराणम् ( ६ ) षष्ठ नारदीयपुराणम् ( ७ ) सप्तम मार्कण्डेयपुराणम् ( ८ ) अष्टममग्निपुराणम् ( ९ ) नवम भविष्यपुराणम् (१०) दशम ब्रह्मवैवर्तपुराणम् (११) एकादश लिङ्गपुराणम् (१२) द्वादश वाराहपुराणम् ( १३ ) त्रयोदश स्कन्दपुराणम् (१४) चतुर्दश वामनपुराणम् (१५) पञ्चदश कूर्मपुराणम् (१६) षोडश मत्स्यपुराणम् ( १७ ) सप्तदश गरुडपुराणम् ( १८ ) अष्टादशञ्च ब्रह्माण्ड-पुराणम्। तथाहि—

ब्राह्म पद्म वैष्णव च शैव भागवत तथा।
तथान्य नारदीय च मार्कण्डेय च सप्तमम्॥
आग्नेयमष्टम चैव भविष्य नवम तथा।
दशम ब्रह्मवैवत लैङ्गमेकादश स्मृतम्॥
वाराह द्वादश चैव स्कान्द चात्र त्रयोदशम्।
चतुर्दश वामनक कौर्म पञ्चदश तथा॥
मात्स्य च गारुड चैव ब्रह्माण्ड च तत परम्।
महापुराणान्येतानि ह्यष्टादश महामुने॥

३।६।२१-२४

अपि च देवीभागवतस्य प्रथमे स्कन्धे द्वितीयाध्याये तृतीयश्लोके आद्यक्षर-क्रमेणाष्टदश पुराणनामान्येव प्रोक्तानि सन्ति—

मद्वय भद्वय चैव ब्रत्रय वचतुष्टयम्।
अनापलिङ्ग कूस्कानि पुराणानि प्रचक्षते॥ १।२।३

आदौ म–अक्षरे पुराणद्वयम् (२) मत्स्यपुराणम्, मार्कण्डेयपुराणञ्च।
,, भ–अक्षरे पुराणद्वयम् (२) भागवतपुराणम्, भविष्यपुराणञ्च।
,, ब्र–अक्षरे पुराणत्रयम् (३) ब्रह्म ब्रह्मवैवर्त ब्रह्माण्डपुराणानि।
,, व–अक्षरे पुराणचतुष्टयम् (४) वायु-वामन वाराह विष्णुपुराणानि।

| | | |
|---|---|---|
| आदौ अ–अक्षरे | एकम् | (१) अग्निपुराणम् । |
| ,, ना–अक्षरे | ,, | (१) नारदीयपुराणम् । |
| ,, प–अक्षरे | ,, | (१) पद्मपुराणम् । |
| ,, लि–अक्षरे | ,, | (१) लिङ्गपुराणम् । |
| ,, ग–अक्षरे | ,, | (१) गरुडपुराणम् । |
| ,, कू–अक्षरे | ,, | (१) कूर्मपुराणम् । |
| ,, स्क–अक्षरे | ,, | (१) स्कन्दपुराणम् । |
| | | १८ |

विजया दशमी
वैं० स० २०३६
दिनाङ्क २५।१०।७९

विद्वद्वशवद
**श्रीकृष्णमणि त्रिपाठी**
भारतीय साहित्यशोधसंस्थानम्,
वाराणसी ।

# सम्पादकीयम्

गोप-गोपी समाश्लिष्ट यशोदानन्दवर्द्धनम् ।
श्रीकृष्ण परमानन्द वन्दे वेदादिसस्तुतम् ॥

भारतीया सस्कृतिर्हि वेद-स्मृति पुराणानामाश्रयेणाद्य यावदत्रावगत्या प्रचलिता । अनेकशाखासु विभक्तेस्वपि वेदेषु, अष्टादशसु स्मृतिषु, पुराणेषु च तस्या स्वरूपमेकरूपमेवोपलभ्यते । तेषु भारतीयाचार विचार व्यवहारादीना समान रूप दृश्यते । वेदवाङमये यद् भारतवर्षीयाचारविचारव्यवहारादीना स्वरूप सक्षेपत उपलभ्यते । तत् स्मृतिषु विस्तृत पुराणेषु ततोऽपि कथोपकथना-ख्यानोपाख्यानेतिहासद्वारा अतिविस्तृत जातम् । कि तु सर्वत्र पुष्पमालाया सूत्रमिव वैदिक मूलस्रोत स्वरूप सवत्रानुस्यूतमेवानुभूयते । यानि आधुनि काना नूतनानि विज्ञानानि समस्त विश्वमाश्चयचकित कुर्व ति तानि वेद स्मृति-पुराणोपपुराणेषु क्वचित्सक्षेपत क्वचन च विस्तृतोऽक्षिगोचरी भवन्ति । अतो पुराणादीनामनुशीलन नितान्तमावश्यकम् । श्रद्धेय प० श्रीकृष्णमणित्रिपाठिना विवेचितमिद पुराणपात्रपर्यालोचलनमवलोक्यस्यासम्पादने मेऽभिरुचिरजायत । अतो यथाज्ञान मयास्य सम्पादन कृतम् । सम्पादने मानवसुलभा भ्रमप्रमादिदोष-ज या त्रुटि विस्मृत्य विमलाशया विद्वासो "गच्छत स्खलन क्वापि भवत्येव प्रमादत" इति धिया मामवश्यमनुग्रहीस्य-तीत्याशासानो भूतभावनस्य भगवतो भवानीपतेश्चरणयो समभ्यच्य विरमामि ।

विनीतो
राजारामपाण्डेय.
श्रीसरस्वतीसस्कृतमहाविद्यालयस्य
प्रधानाचाय
( भदोहा, वाराणसी )

दीपावली
वै० स० २०३६
दिनाक ७।११।७९

रस-त्रि-व्योम-युग्माङ्के वैक्रमे वत्सरे शुभे ।
कार्तिकस्याऽसिते पक्षेऽमावस्यातिथौ भृगौ ॥
कृतिरियमगात् पूर्णा विश्वेशस्य प्रसादत ।
कृत्याऽनयाऽभिनवया श्रीकृष्णा सम्प्रसीदतु ॥

## सादरं समर्पणम्



श्री १०८ स्वामी श्रद्धानन्द सरस्वती जी महाराजाः
( महन्त विशुद्धानन्द गद्दी ) डी० २०।१८, मुंशीघाट, वाराणसी ।

॥ ॐ ॥

# अष्टादशपुराणपरिचयः

( परिवर्द्धितं द्वितीय संस्करणम् )

## मङ्गलाचरणम्

( १ )

यस्मात् सर्वविदश्चराचरमिद मायाजगज् जायते
यस्मिंस्तिष्ठति याति चान्तसमये कल्पानुकल्पे पुन ।
य ध्यात्वा मुनय प्रसन्नमनसा मोक्ष लभन्ते ध्रुव
त वन्दे पुरुषोत्तम सुमनस लोकोत्तरानन्ददम् ॥

( २ )

यो देवैर्मुनिसिद्धचारणगणै सर्वै सदा स्तूयते
यो विश्वस्य हि सृष्टिपालनलयानामादिहेतु विभु ।
य ससारमहार्णवे निपतितस्योद्धारको वत्सल-
स्त सर्वेशमनीशमीशमनीश भक्त्या नमामीश्वरम् ॥

( ३ )

यस्मिन्न्यस्यमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने
नित्य यत्र निवेशितात्ममनसा भक्ति समुज्जृम्भते ।
मुक्ति चेतसि य स्थितोऽमलधिया पुंसां ददात्यव्यय
स्तं वृन्दावनदिव्यवैभवमह श्रीकृष्णचन्द्र भजे ॥

( ४ )

श्रीमद्रामयशस्विपाठिचरणाम्भोज स्मरन् सादरं
सिद्धान् भागवतोत्तमान् गुणनिधीनत्यादरादाननन् ।
वेदव्यासमहर्षिमार्यममल मूर्ध्ना श्रयन् साञ्जलि-
वन्देऽह गणप पुराणपुरुषं सर्वेशमीशं प्रभुम् ॥

( ५ )

कान्ति सिताऽऽमृषति निन्दितशारदेन्दु
यंत्रैकतो विलसितामासिताङ्गशोभम् ।
वृन्दावनेऽपि कृतयामुन-गाङ्गसङ्ग
राधामुकुन्दयुगलं तदह नमामि ॥

## महर्षे र्व्यासस्य गुण-गान

( १ )

वायुपुराणे

जयति पराशर सूनु सत्यवती हृदय-नन्दनो व्यासः।
यस्यास्यकमलकोश व ङ्मयममृतं जगत् पिवति॥

( २ )

गीतामाहात्म्ये—

नमोऽस्तु ते व्यासविशालबुद्धे ! फुल्लारविन्दायतपत्रनेत्र !
येन त्वया भारततैलपूर्ण प्रज्वालितो ज्ञानमय' प्रदीप ॥

( ३ )

भावविवरणे

प्रमाणजातेरवबुध्य यस्य सा" पद त्यक्तभवा भजन्ते।
जना निजानन्द-पदेच्छवोऽल त वासवी-सूनुमह प्रपद्ये॥

( ४ )

सक्षेपशारीरके

वागविस्तरा यस्य बृहत् तरङ्गा
बेलातट वस्तुनि तत्त्वबोध।
रत्नानि तर्कप्रसरप्रकारा
पुनात्वसो व्यासपयोनिधिर्न॥

( ५ )

तत्त्वशुद्धौ

दुस्तर्क-जालविसकण्टकवृक्षषण्ड
पाषण्डवाद-बहु गुल्मलतोपरोधम्।
निर्धूत-मुक्तिपथमुद्धृत कण्टक य-
श्चक्रे पराशर सुताय नमोऽस्तु तस्मै॥

( ६ )

महाभारतस्यादिपर्वणि

अचतुवदनो ब्रह्मा द्विबाहुरपरो हरि।
अभाललोचन शम्भु भगवान् बादरायण॥

# पौराणिकप्रभापरिशीलनम्

पुराणार्णवगाम्भीर्यं विलोड्य विदुषा मुदे ।
पुराणरत्ननिचये कृतभूरिपरिश्रम ॥
श्रीपाठ्युपाह्व—श्रीकृष्णमणिशास्त्री सुधीवर ।
प्रस्तौतीद पुराणाना प्रभाया परिशीलनम् ॥

## पुराणावतरणप्रसङ्ग

मनुष्यो महानपि बुद्धिमान् कथ न स्यात्, किन्तु तस्मिन् भ्रमप्रमादादीना सम्भावना भवत्येव । अत एव मानवरचित ग्रन्थमधीत्य निर्भ्रान्त पूण च ज्ञान भवितु नार्हति । वेदा न केनापि मनुष्येण रचिता नापीश्वरेण निर्मिता सन्ति, किन्तु परमेश्वरनिश्वासवन्नित्या अनादयोऽनन्ता अपौरुषेयाश्च सन्ति । प्रलये परमेश्वरेऽन्तर्हिता ते सृष्टिसमये ईश्वरस्य निश्वासरूपेण नि सरन्ति । सव प्रथम ब्रह्मा वेदाना ज्ञान प्राप्नोति । ततो य ऋषि यादृशीं तपस्या कुरुते, तस्य समक्षे तदनुरूप एव वेदस्याश प्रादुभवति । तत स ऋषि स्व शिष्य वेदं शिक्षयति, सोऽपि स्व शिष्य शिक्षयतीत्येव शिष्यप्रशिष्यतच्छिष्याणाम विच्छिन्नया गुरुशिष्यपरम्परया अद्यत्वेऽपि वेदाना प्रचार प्रसारो वा वोभवति[1]।

(वेदा न केनापि पुरुषेण प्रणीता सन्ति । अतस्ते अपौरुषेया उच्यन्ते । अत एव तत्र न भ्रम प्रमाद कर्णापाटव विप्रलिप्सादीना दोषाणा काऽपि सम्भावना विद्यते । इत्थ वेदा एव सर्वश्रेष्ठानि निर्भ्रान्तज्ञानसाधनानि सन्ति ।

पुरा द्विजबालका उपनयनसस्कारानन्तर ब्रह्मचर्यपूर्वक चिरकाल गुरुगृहे उषित्वा वेदान् अभ्यसन्ति स्म । ततो वेदार्थमवगन्तु शिक्षा कल्प व्याकरण

---

१ युगान्तेऽ र्तहितान् वेदान् सेतिहासान् महषय ।
लेभिरे तपसा पूवमनुज्ञाता स्वयम्भुवा ॥ वेदचयने २
त एते ऋषयो वेद स्व स्व व्यस्यन्ननेकधा ।
शिष्यै प्रशिष्यै तच्छिष्यै वेदास्तेशाखिनोऽभवन् ॥ श्री भा १।४।२३
ऋषीणा तप्यता तेषा तप परमदुलभम् ।
मन्त्रा प्रादुभवन्त्यादौ पूर्वं मन्वन्तरस्य च ॥ म पु १४४।६२

निरुक्त-ज्यौतिष छन्दसा षण्णा शास्त्राणामध्ययन कुर्वन्तिस्म । एव महता परिश्रमेण वेदाना वास्तविक अर्थोऽवगम्यतेस्म । तथा च निष्कामभावनापूवक वैदिकाना कर्मणामनुष्ठानेन यदा अन्त करण निर्मल भवति, तदैव निमले मनसि वास्तविक ब्रह्मज्ञान सम्भवति । एतदभिप्रेत्यैवोक्तम्—भगवता पतञ्जलिमुनिना महाभाष्यस्य पशपशाह्निके ।

"ब्राह्मणेन निष्कारण षडङ्गो वेदोऽध्येयो ज्ञ`यश्च ।"

व्यास वाल्मीकिमुनिप्रभृतयो महर्षयोऽलौकिकीं तपस्या कृत्वा परमात्म नोऽनुकम्पया वेदाना यथार्थमर्थं ज्ञात्वा तत्प्रचारस्यावश्यकतामनुभूतवन्त । साधारणा जना अधिकसमयपयन्त गुरुगृहे स्थातु न शक्नुवन्ति, नापि वेदार्थ, मवगन्तु सब्रह्मचर्यं तादृश कठिन परिश्रम वा कर्तु प्रभवन्ति । अत तादृशाना जनाना कृते वेदाना निगूढमर्थंनिरूपयितु ते सरसाया सुबोधाया सरलाया प्राञ्जलायामतिमञ्जुलाया सुरुचिपूर्णायाञ्च सस्कृतभाषाया रामायण महाभारत पुराणागि च व्यरचयन् । तथाचोक्त महाभारतस्यादिपर्वणि—

इतिहासपुराणाभ्या वेद समुपबृ हयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामय प्रहरिष्यति ॥ १।२६८

अतो भारतीये रामायणेन महाभारतेन पुराणैश्च वेदाना यथाथमर्थमवगन्तु यत्नो विधीयते ( ये च पुराणादीनामध्ययन विना वेदाना यथार्थमर्थमवगन्तु चेष्टन्ते, तेषा वास्तविक वेदार्थज्ञानमसम्भव प्रतिभाति, यतो हि एकस्यैवाखण्डस्य सार्वजनीनस्य धर्मस्य प्रतिपादका एकस्या एवाखिललोककल्याणकारिण्या भारतीयीया सस्कृतेश्च परिपोषका वेदा रामायण महाभारत पुराणानि च सन्ति । अत एवोक्त मत्स्यपुराणे—

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विज ।
न चेत्पुराण सविद्यान्नैव स स्याद्विचक्षण ॥ २।५१

यदा भूमण्डलस्य समस्ता जातयो भोजनपानशयनसन्तानोत्पादनातिरिक्त किमपि न जानन्तिस्म । तस्मिन् घोराऽन्धकारसमयेऽपि सभ्यताया ज्योति - प्रज्वालका आर्याणा वेदा एव सन्ति । देशीया विदेशीयाश्च सर्वे विद्वास एकेन स्वरेण स्वीकुर्वन्ति यद् ऋग्वेदात्पूर्वं किमपि पुस्तक विश्वस्य समक्षे नेदानीं यावदुपलब्ध विद्यते । ऋग्वेद एव सर्वप्राचीन पुस्तकमस्ति । विश्वस्य ज्ञानिनो विज्ञानिनश्चाद्य यावत् यत्किमपि अन्वेषण कृतवन्त. तत्सर्वं वेदे सूक्ष्मरूपेण विद्यत एव । तेषामेव वेदार्थाना सुगमतया सविस्तर ज्ञानाय पुराणानामाविर्भावोऽभवत् । तथाचोक्त पुराणार्णवे—

विस्ताराय च वेदाना स्वय नारायण प्रभु ।
व्यासरूपेण कृतवान् पुराणानि महीतले ॥ १५ ॥

गूढतया वर्णितानामर्थाना यावत् सुरुचिपूर्णया शैल्या वर्णन न क्रियेत, तावत् पुराणाना निर्माणस्य प्रयोजन पूर्णं न भवितुमर्हेत् अत एव आख्यानोपाख्यानगाथाकल्पशुद्ध्यादिभि तेषा विस्तार कृतवान् भगवान् व्यासदेव । तदुक्त विष्णुपुराणे—

आख्यानैश्चाप्युपाख्यानै गाथाभि कल्पशुद्धिभि ।
पुराणसहिता चक्रे पुराणार्थविशारद ॥ ३।६।१५

वेदविज्ञानस्य मनोरञ्जके आख्याने परिणतीकरण पुराणानामपूर्वं कौशल विद्यते । वेदाना वास्तविक रहस्यमवगन्तु प्राचीनाख्यानोपाख्यानादिवर्णनव्याजेन विविधानुपदेशान् दातु विभिन्नाना विषयाणामुत्कटलालसा परिहायान्त करण भगवदुन्मुख कर्तुं च यासामैतिहासिकघटनानामुल्लेख आवश्यकोऽस्ति, पुराणेषु तासामेव विशेषत वर्णन विद्यते । सर्वासा पौराणिकाना कथाना मूल वेदा एव विद्यन्ते । पुराणेषु यत्किमपि लिखित वर्तते तत्सर्वं वेदमन्त्राणा विस्तृता व्याख्याऽस्ति । यथा ऋग्वेदे "इद विष्णुर्विचक्रमे त्रेधा निदधे पदम् (१।१२।१७)" इत्यादिना वर्णितवामनावतारकथा वामनादिपुराणेषु विस्तरेण वर्णिता विद्यते । कस्या अपि आख्यायिकायास्सविस्तर वर्णन वेदस्योद्देश्यन्नास्ति, किन्तु वेदे कस्मिंश्चिदुद्देशे या कथातिसक्षेपेण निर्दिष्टाऽस्ति सैव पुराणेषु विस्तृताख्यायिकारूपेण वर्णिता विद्यते । यतो हि साधारणेषु मनुष्येषु कौतूहलपूर्वक भगवद्भक्त्युत्पादन पौराणिकानामाख्यायिकाना प्रमुख लक्ष्यमस्ति । यथा श्रीमद्भागवतादिपुराणेषु जगन्मातु गिरिराजकुमार्या भगवत्या पार्वत्या उमारूपेण जन्मग्रहणकथा दृश्यते । केनोपनिषदि च ब्रह्मविद्याया हैमवत्या उमारूपेण प्राकट्य वर्णितमस्ति । तद्यथा—'स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमा हैमवतीम् ।" यथा वा अथर्ववेदे ( का० ८ सू० प्र० ३।४।५ ) महाराजस्य पृथो पृथ्वीदोहन सक्षेपेण वर्णितमस्ति । पर श्रीमद्भागवते तदेव सविस्तर वर्णित विद्यते । यतो हि वेदा नोपाख्यानमूलका सन्ति, अत तेषु स्थलविशेषे एवोदाहरणरूपेणोपाख्यानमस्ति, किन्तु पुराणेषूपाख्यानानामेकत्र समावेशो जातोऽस्ति।अत एव पुराणेषूपाख्यानाना माधिक्य विस्तारश्च दृश्यते । वेदा पुराणानि चैकस्य सनातनधर्मस्याभिवृद्धये लोककल्याणाय च विभिन्नकाले आविर्भूता महाग्रन्था मन्यन्ते । पुराणेषु वेदात् कथमपि भिन्नता नास्ति । यदि भिन्नतास्ति, तर्हि उभयो वर्णनपद्धतौ एव । तस्माद्वेदार्थाना विवरणाद्वेदपुराणयोरैक्य निर्बाध सिध्यति ।

## पुराणानां महत्वम्

पुराणाना महत्व विविधाभि दृष्टिभिरवगम्यते। धार्मिकदृष्ट्या पुराणानि वेदनिहितस्यैव धमस्य भावगम्यया सरलया भाषया विशद वर्णन कुर्वन्ति। पुराणाना सामाजिक महत्वमपि न्यून नास्ति। प्राक्तनस्य समाजस्य स्वरूपमस्माभि पुराणैरेवोपलभ्यते। पौराणिकस्यैतिहासस्य पुष्टिस्तु तत्रतत्रो पलब्धै शिलालेखै वैदेशिकाना यात्रावणनेन चेदानी प्रचुरमात्राया बोभूयते। ऐतिहासिकदृष्टया च पुराणेषु तीर्थाना विशद वर्णन विद्यते, येन तत्तत्स्थानाना विस्तृतस्य भूगोलस्य सम्यग ज्ञान भवति। स्कन्दपुराणस्य काशीखण्डे प्रत्येकस्थानाना शिवलिङ्गाना व विस्तृत वणन विद्यते। यत्सहयोगेन काश्या प्रसिद्धाना भूभागाना समीचीनतया ज्ञान भवितुमर्हति। श्रूयते—विदेशीया विद्वास पुराणाना साहाय्येनैव नीलनद्या अन्वेषण कृतवन्त ।

पुराणाना प्रमुख प्रयोजन वेदविहिताना तत्त्वाना जनसाधारणेषु प्रचारो विद्यते। एतत्सिद्धये तै सरला सुगमा सस्कृतभाषाऽवलम्बिता। केवल भारतवर्षे एव नहि, किन्तु भारताद्बहिर्विविधेषु देशेषु पुराणै वैदिकविचार धाराया प्रवाहविस्तारस्य सुयशोलब्धम्। पुराणाना कृपया सर्वसाधारणा मनुष्या स्वजीवन सयमशील विधाय कल्याणमार्गप्रवृत्तेरधिकार प्राप्तवन्त वैदिकधमस्य लोकप्रियत्वनिर्माणश्रेय पुराणैरेव प्राप्तमस्ति। पुराणानि समस्ताना विद्यानामक्षया कोषा सन्ति। अत विविधाना दरिद्रतान लक्ष्यीभूतमपीद भारतवर्षमद्यत्वेऽपि पुराणाना प्रभावेण धनवानिव स्वकीय शिरो विश्वसमक्षे समुन्नत कर्तुम् शक्नोति।

पुराणानि गौरवदृष्ट्या अतएव दृश्यन्ते यदत्र वेदाना शिक्षाया पुष्टि कृताऽस्ति, दृष्टान्तद्वारा च वेदार्थानामेव विशदीकरण विद्यते। विश्वस्मिन् कस्या अपि सभ्यजाते पार्श्वे पुराणसदृश सर्वाङ्गपूर्णो न कोऽपि ग्रन्थो विद्यते। पुराणेषु वेदार्थाना स्पष्टीकरणेन सह कथावैचित्र्यद्वारा गूढाद्गूढतम स्यापि तत्वस्य साधारणजनाना हृदयङ्गमसम्पादनवैशिष्ट्यमस्ति।

वर्तमानेयुगे धर्मरक्षाया, वर्णाश्रमव्यवस्थाप्रचारस्य, भारतीयाया सस्कृतेरुद्बोधस्य, भक्तेर्विकासस्य च यद्दशन बोभवीति, तस्य श्रेय पुराणा नामेवास्ति। पुराणैरेव भारतीयादर्शजीवनस्य, भारतीयाया सभ्यताया सस्कृते', विद्याया वैभवस्य, भारतीयाना ज्ञानगरिम्ण, उत्कषस्य च वास्तविक ज्ञान भवति। प्राचीनकाले भारतीया आधिभौतिकाधिदैविकाध्यात्मिकाना मुन्नतीना चरम सीमानमुपगता आसन्, एतस्य सकेत पुराणद्वारा एवानु भूयते। अत एतन्नि सशयं वक्तु शक्यते यत् पुराणानि बद्धाना मुमुक्षूणा जीवन्मुक्ताना च मनुष्याणा सन्मार्गप्रदर्शकानि सन्ति।

वेदे सूक्ष्मरूपेण यन्निर्दिष्टमस्ति तस्यैव विस्तृता व्याख्या व्यासदेवेन भाष्यरूपेण महाभारते पुराणेषु च कृताऽस्ति। अत स्वय तेनैव महाभारते सकेत कृतोऽस्ति यत् "इतिहासपुराणाभ्या वेद समुपबृहयेत्।" अद्यत्वे यद्यपि वेदाना सर्वा शाखा नोपलभ्यन्ते तथापि दिव्यज्ञानसम्पन्न त्रिकालदर्शी महर्षिर्वेदव्यास तासा मूलविषय पुराणेषु यत्र तत्राङ्कितवानस्ति, येनाद्यापि बहूना वेदशाखानामनुपलब्धावपि तासा प्रतिपाद्यविषयाणामवगाहन क्रियते एव। वेदे पुराणस्याप्युल्लेखो विद्यते, तथा पुराण पचमो वेदो मन्यते। यथा—"एव वा ह्यरे अस्य महतो भूतस्य निश्वसित ऋग्वेदो यजुर्वेद सामवेदोऽथर्वाङ्गिरस इतिहास पुराण विद्या उपनिषद।" यथा वा—"सहोवाच ऋग्वेद भगवोऽध्येमि यजुर्वेद सामवेदमथर्वण चतुथमितिहास पुराण पञ्चम वेदानाँ वेदम्।" अत वेदाना प्रामाण्ये पुराणानामपि प्रामाण्य स्वीकृतमेव भवति। यथा ब्रह्मण सकाशात् तपसा पवित्रान्त करणाना महर्षीणा निमले हृदये वेदानामाविर्भावो जात। तथैव ईश्वरानुग्रहेण तेषामेव महर्षीणा मनसि पुराणानामपि प्रादुर्भावोऽजायत।

सस्कृतसाहित्ये पुराणाना स्थान महदुन्नतमस्ति। यतो वेदानन्तर सर्वमान्यानि सवप्राचीनानि च पुराणान्येव सन्ति। सृष्ट्यादौ "यो ब्रह्माण विदधाति पूव वेदाश्च तस्मै प्रहिणोति नित्यम्।" इत्यनुसार प्रथम ब्रह्माणमुत्पाद्य परमेश्वर वेदज्ञानमेव तस्मै उपदिशति। भगवतो वेदज्ञानमुपलभ्य ब्रह्मा अन्यानि शास्त्राणि स्मरति। तत्र सर्वप्रथम पुराणान्येव स्मरति। तथाचोक्त पद्मपुराणे सृष्टिखण्डे, मत्स्यपुराणे च—

पुराण सवशास्त्राणा प्रथम ब्रह्मणा स्मृतम्।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिगता ॥ ५३।३

अतो वेदवत्पुराणान्यपि नित्यानि सनातनानि अपौरुषेयाणि सिध्यन्ति। अतएव भगवत्पूज्यपादै श्रीशङ्कराचायमहोदयै बृहदारण्यकभाष्ये स्पष्टमुक्तम्—"निश्वसितमिव निश्वसित यथा अप्रयत्नेनैव पुरुषनिश्वासो भवति एव पुराणम्" महर्षिणा वात्स्यायनेन च स्वकीये न्यायदर्शनभाष्ये—"य एव मन्त्रब्राह्मणस्य द्रष्टार प्रवक्तारश्च ते खल्वितिहासपुराणस्य धमशास्त्रस्य चेति विषयव्यवस्थापनाच्च प्रमाणाम्। यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थापन धमशास्त्रस्य विषय।" अलौकिकयोगबलेन समस्त विश्व हस्तामलकवत्पश्यद्भि पूज्यपादै श्रीपतञ्जलिमुनिभि स्वकीये पाणिनीय व्याकरणमहाभाष्ये "वाकोवाक्यमितिहास पुराणम्।" इति वदद्भि पुराणाना प्रामाण्य स्पष्टमेव स्वीकृतम्।

## पुराणानामध्ययनस्यावश्यकत्वम्

वेदेषु येषामाध्यात्मिकाधिदैविकाधिभौतिकबौद्धिकव्यावहारिकनैतिक सांस्कृतिकदेवमानुषजडचेतनात्मकाना विषयाणा सूक्ष्मरूपेण विधान विद्यते, ब्राह्मणभागे आरण्यके स्मृतिग्रन्थेषु च येषा प्रतिपादनमस्ति, तेषा सर्वप्रकाराणा पुराणेषु आकर्षकबुद्धिगम्यमनोग्राह्योपदेशप्रदकथानकरूपेण वणन कृतमस्ति। पुराणेषु न केवलमाचारव्यवहारदैनिकक्रियामात्रस्योल्लेखोऽस्ति, किन्तु मानवजीवनोपयोगिनीना विविधाना भावनाना पूण विवेचन विद्यते। अत पुराणानामध्ययनेन वेदाथनिधीनामुपलब्धिभवितुमहति। पुराणाध्ययन विना यथाथज्ञान मानवीजिज्ञासाया पूर्तिश्च न सम्भवति। यद्यपि महर्षिणा व्यास देवेन ब्रह्मसूत्र योगभाष्ये च प्रतिपाद्याध्यातमनिष्ठाद्वारा त्रितापान्मुक्तये सरल उपाय प्रदर्शितोऽस्ति, तथापि ज्ञाननिष्ठाया पूण परिपाकस्तु पुराणेष्वेव जातोऽस्ति।

पुराणाना कथाभि सरलतया सव साधन शीघ्र बुद्धिगम्य कर्तुं शक्यते। यथा यजुर्वेदस्य ईशावास्यमन्त्रे मनुष्यताया पूणविकासस्य साधन निर्दिष्ट मस्ति, किन्तु केवलेन मन्त्रपाठेनाथज्ञानेनवा सा भावना हृदये न जागर्ति। अत पुराणप्रतिपादिताभि महर्षेर्दधीचे, राज्ञ शिवे मोरध्वजस्य च कथाभिरुपकारभावना, सत्यवादिनो हरिश्चन्द्रस्य महाराजस्य युधिष्ठिरस्य चोपाख्यानेन सत्यनिष्ठा, दानवीरस्य वले कणस्य च कथानकेन दाननिष्ठा, वसिष्ठागस्त्यच्यवनादीना कृत्यैरद्रोहनिष्ठा, अनसूया सतीसीता सावित्री मदालसा दमयन्ती नर्मदा सुकन्या सुलोचनादीना सतीना पवित्राचरणै पातिव्रत्यधर्मपराणताया सञ्चार नरेषु नारीषु च सहसा भवति। एव "स य वद धम चर" इत्याद्युपदेशमात्रेण कश्चित्सत्यवादी धर्मात्मा वा भवितु नार्हति। अतो वेदवाक्यबोधितामितिकतव्यता पुराणेषु कथानकरूपेण मनोग्राह्या विधातुम् ऐहलौकिक पारलौकिक च जीवन सफलयितुमादेशो दत्तोऽस्ति। प्रधानतया पुराणानाम्—

सर्गश्च प्रतिसर्गश्च वशो मन्वन्तराणि च।
वशानुचरित चेति पुराण पञ्च लक्षणम्॥ म० पु० ५३।६४

इति पञ्चलक्षणमादाय मानवजीवनस्य चरमान् लक्ष्यान् अन्तिमानुद्देश्यान् परमपुरुषार्थान् धर्माथकाममोक्षाश्च प्राप्तुमैतिहासिककथानामाधारेण प्रभावपूर्णपद्धतौ ज्ञानविज्ञानयो विस्तार पुराणेषु प्रदर्शितोऽस्ति। पुराणेषु यावत् सुगमं चतुर्वर्गस्य सिद्धे साधनमुपलभ्यते न तावदन्यत्र क्वचन प्राप्यते। महर्षिणा व्यासेन अष्टादश पुराणेषु सर्वेषा धर्माणा सार परोपकारो पुण्य

परपीडन च महत्पाप निर्दिष्टमस्ति। अय मानवताया कीदृग् महान् मौलिक आदर्शोऽस्ति। तथाचोक्तम्—

> अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
> परोपकार पुण्याय पापाय परपीडनम्॥

पुराणेषु दृढनिष्ठाया अन्वेषणे मर्यादापुरुषोत्तमस्य भगवतो रामस्यादर्श-चरित्रेण तस्य जीवनस्य वैशिष्ट्येन मर्यादापालनेन च महती हृदयग्राहिणी शिक्षा प्राप्यते। जनमतमादृत्य स स्वकीया परमप्रिया सवगुणसम्पन्ना सुखदु खसहचारिणीं धमपत्नी साध्वी सती सीता आसन्नप्रसवामपि परितत्याज। पैतृकस्यानुशासनस्यादश स्थापयितु चक्रवर्तिसाम्राज्य सहर्षं तत्याज। अत्याचारस्यान्त कतु दुराचारिणोऽधिनायकवादिनो रावणस्य सकुलोन्मूलन कृतवान्। यादृशो नैतिक सामाजिक चारित्रिक धार्मिको व्यावहारिकश्चादर्शो रामस्य पवित्रे चरित्रे प्राप्यते, तन्नाखिले भूमण्डले कस्याञ्चिदपि सभ्यताया मुपलभ्यते। रामराज्ये शासनव्यवस्थाया विवरण महर्षिणा व्यासदेवेन महाभारते एव प्रदर्शितम्—

> "न पुत्रमरण केचिद्रामे राज्य प्रशासति।"

वाल्मीकिमुनिनापि रामायणे—श्रीरामस्य राज्ये न कश्चिदुपद्रव आसीत्। सात्विकस्यानुशासनस्यायमेवादर्शोऽस्ति।

> न पुत्रमरण केचिद् द्रक्ष्यन्ति पुरुषा क्वचित्।
> नार्यश्चाविधवा नित्य भविष्यन्ति पतिव्रता॥
> नगराणि च राष्ट्राणि धनधान्ययुतानि च।
> नित्य प्रमुदिता सर्वे यथा कृतयुगे तथा॥ १ १।९१, ९३

एव मार्कण्डेयमुने जीवनेन दीर्घायुष, राज्ञो दिलीपस्य पवित्रेण चरित्रेण गोभक्तेरादर्श पुराणैरेव प्राप्यते। सवजीवेषु दयादर्शिन कस्य देशस्य साहित्ये एवविधमुदाहरण दृश्यते यत्-चक्रवर्ती सम्राडपि एकस्या गो रक्षणार्थं स्वकीय शरीर मासपिण्डमिव गोघातिने क्रूराय सिहाय समर्पयेत्।

पुराणषु सर्वेषामास्तिकदर्शनाना सिद्धान्तस्य सूत्ररूपेण निरूपणमस्ति। साख्ययोगवेदान्तदशनाना तु पुराणेषु विशेषतो विवेचनमुपलभ्यते। किञ्च व्याकरणसाहित्यच्छन्दोज्योतिषनिरुक्तशिक्षाकल्पायुर्वेदधनुर्वेदगन्धव-वेद-स्थापत्यवेद-राजनीतिममाजनीतिविविधधर्माङ्गादिषु विषयेष्वपि पुराणेषु पर्याप्त प्रकाश प्राप्यते। अतएव पुराणानि भारतीयसस्कृते विश्वकोषा उच्यन्ते। लौकिकविषयातिरिक्त पुराणेषु पारलौकिकविषयाणामपि प्रचुर विवेचन कृतमस्ति। आधुनिका वैज्ञानिका बहुना व्यापारेण प्रेतलोकस्य

मङ्गललोकस्य च किञ्चिद् ज्ञान प्राप्तवन्त, परन्तु अस्मिन् विषये तेषा ज्ञानमिदानीं यावत् अपूर्णमेवास्ति। यतोहि नाद्युनापर्यन्त तेषा ज्ञान जातमस्ति यदित परमपि कश्चित्सूक्ष्म स्तरो विद्यते। पुराणेषूर्ध्वमधश्च स्थिताना चतुर्दशाना लोकाना तत्रत्यनिवासिना तेषामायुष, आहारस्य, विहारस्य, तत्र प्रचलितस्य कालमानस्य च निश्चित वर्णन वर्तते। येनेद यदस्माक पूर्वजाना महर्षीणा ज्ञान कियदतिनिर्मल विस्तृत बहुज्ञतापूर्णश्चासीत्।

मानवजन्मन प्रधान लक्ष्य भगवत्प्राप्तिरस्ति, तत्साधनानि च पुराणानि सन्ति। निष्कामकर्मद्वारा त्यागवृत्तिग्रहणपूर्वक स्वर्गापवर्गयो मार्गस्य सुलभानि साधनानि पुराणान्येव सन्ति। पुराणानि सर्वसाधनयोगक्रियासिद्धितन्त्र मन्त्रकल्याणकारिसिद्धान्तै परिपूर्णानि सन्ति। अतएव सर्वशास्त्रेषु पुराणाना गौरव गीतमस्ति।

पुराणेषु ज्ञानस्य कर्मण भक्तेश्च महत्वपूर्णवर्णनेन सह मानवजीवनस्य यावन्तो दृष्टिकोणा सन्ति तेषा सर्वेषा वर्णन वर्तते। पुराणै आबालवृद्धा नरा नार्यश्च समान लाभ प्राप्तु शक्नुवन्ति। पुराणानि भवरोगस्याद्भुतानि औषधानि सन्ति। ससारस्य सर्वासा समस्याना सरलतया सुगमीकर्तु साधनै सम्पन्नानि पुराणानि भगवतो व्यासदेवस्य कृपाया फलानि सन्ति। पुराणानि सासारिकत्रितापतप्ताना प्राणिना प्रबोधम्, अज्ञानान्धकारे निपतिताना प्रकाशम्, भ्रान्ताना सन्मार्गम्, निराशानामाशाज्योति, शोकसन्तप्तानामुल्लासमय प्रसादम्, पथभ्रष्टाना कर्तव्यज्ञानम्, पापिना पापनाशनसाधनम्, नीतिविशारदाना नीतिनैपुण्य निष्कर्मिणा साधनोपदेशम्, भक्ताना भक्तिभाव ज्ञानिनामलौकिकज्ञानस्य प्रकाश ददति। तात्पर्यमिदमस्ति यद् ये जिज्ञासवो येनोद्देशेन पुराणेषु सविश्वास श्रद्दधति भक्तिभावेन च पुराणाना स्वाध्याय कुर्वन्ति, ते समुद्रादमूल्य रत्नमिव एभ्य उभयलोककल्याणकारि बहुमूल्य सदुपदेश प्राप्य स्व जीवन सफलयितुम् समर्था भवन्ति।

पुराणानि त्रिकालेषूपयोगीनि सन्ति। तानि अतीतगौरवगानेन सह वर्तमानकाले सुखशान्तिसञ्चार सम्पाद्य भविष्यत्कालाय मुक्तिसन्देश ददति। यतोहि पुराणानि सर्वश्रेणिमनुष्येभ्य तदधिकारानुसार कर्म कर्तु सन्मार्गसाधनस्योपाय प्रदर्शयन्ति। अभ्युदयस्य नि श्रेयसस्य च सिद्धये जीव कथम ग्रसरो भवितुमर्हतीत्यस्य विषयस्य पुराणेषु विशद वर्णन विद्यते। पुराणेषु सृष्टिकालत आरभ्यैकस्याविच्छिन्नक्रमस्य हृदयङ्गमस्याख्यानस्योपलब्धिर्भवति। अत पुराणानि सर्वतोमुख्या उन्नते अभ्युदयनि श्रेयसयो साधनस्य चाक्षयो भाण्डागारो वर्तते।

पुराणेषु ज्ञान कर्म वैराग्य भक्ति विश्वास यज्ञ दान-तप यम नियमस्थम सेवा दया दाक्षिण्य वर्णाश्रमधर्म पुरुषधर्म स्त्रीधर्मसदाचारावतारादीना कल्याण कारिण सदुपदेशा सरसया सुगमया सुरुचिपूर्णया उपादेयया च भाषया लिखिता सन्ति। एतदतिरिक्त भूगोलखगोलयो विवेचन स्थावरजङ्गमयो सृष्टेश्च सूक्ष्म वर्णन विद्यते। पुराणेषु प्रदत्तेषु भूविवरणप्रसङ्गेषु विविध-सिद्धपीठतीर्थक्षेत्रवनपर्वतादीना वर्णनमस्ति, येनाधुनिकानामनुसन्धानकर्तॄणा महत्साहाय्य प्राप्यते। एव प्रकारेण सर्वोपयोगिना पुराणानामध्ययनस्य महती आवश्यकताऽनुभूयते।

## वेदपुराणयोः पार्थक्यम्

यद्यपि वेदविहितानामेव विषयाणा विशदीकरण पुराणेषु वर्तते इति वेदपुराणयोरैक्यमस्ति, तथापि उभयो महदन्तर विद्यते। वेदा द्विजसमुदायेषु प्रतिष्ठिता अशिक्षितासु जनतासु च अपरिचिता सन्ति। पर पुराणानि सर्वेषु नरेषु सर्वासु च नारीषु विचरन्ति, सर्वेषा मनासि अनुरञ्जयन्ति सर्वपरिचितानि च सन्ति। पुराणाना कृपया एव वेदा विश्ववर्तिना सर्वविधाना नराणा नारीणा च जीवन सनियम्य चरमलक्ष्ये परमतत्वे उत्कृष्टकल्याणे विशुद्धप्रेम्णि निर्मला नन्दस्य मार्गे प्रवर्तयितुमधिकार प्राप्तवन्त। वेदेभ्य पुराणानामिद वैशिष्ट्य विद्यते यत्र वेदे "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्युक्त्वा नेति नेति च कृत्वा य परमेश्वरो बुद्धीन्द्रियादेर्विषय वर्णयित्वा सर्वसमक्षमुपस्थाप्यते स। वेदाना "सत्य ज्ञानमनन्त ब्रह्म" पुराणेषु भक्ताना कृते न केवल आराध्य देवस्य प्रेममयीमूर्तिरूपेण औदार्यसौन्दर्यमाधुर्यादीना निलयरूपेण चोपस्थित भवति, किन्तु दीनबन्धु दीनानाथ करुणावरुणालय पतितपावनाशरणशरणा नाथनाथादिरूपेणापि समये समये उपतिष्ठते। वेदेषु अग्राह्यरूपे वर्णित ब्रह्म पुराणेषु अनेकेषु रूपेषु आविर्भूय जीवमात्रस्य चाक्षुषप्रत्यक्षगोचरो भवति।

अपाणिपादो जवनो गृहीता पश्यत्यचक्षु स शृणोत्यकर्ण।
स वेत्ति वेद्य न च तस्यास्ति वेत्ता तमाहुरग्र्य पुरुष महा तम्॥ ३।१९

अपाणिपादादिरूपेण वर्णित वेदस्य ब्रह्म श्रीमद्भागवते महापुराणेषु—

तमद्भुत बालकमम्बुजेक्षण चतुर्भुज शङ्खगदायुदायुधम्।
श्रीवत्सलक्ष्मङ्गलशोभि कौस्तुभ पीताम्बर सान्द्रपयोदसौभगम्॥ १०।३।९
महार्हवैडूर्यकिरीटकुण्डलत्विषापरिष्वक्तसहस्रकुन्तलम्।
उद्दामकाञ्च्यङ्गदकङ्कणादिभिर्विरोचमान वसुदेव ऐक्षत॥ १०।३।१०

इत्यादिना विग्रहवान् निर्दिष्टः। यत्र वेदवर्णितस्य ब्रह्मण केवल स्मरणमेव कर्तु शक्यते, तत्र मनुष्या पुराणप्रतिपादितस्य परमेश्वरस्य सेवा स्पर्श च

कर्तुं शक्नुवन्ति, तन्मुखेऽनेकविध भोज्यपदार्थ दातु शक्नुवन्ति तेन सह वार्तालापौ कर्तुं शक्नुवन्ति, तथा च विविधाना भावानामादान प्रदानमपि कर्तुं शक्नुवन्ति, वहुविध स्वकीय मनोरथ पूरयितु च शक्नुवन्ति। पुराणप्रपञ्चित परमेश्वर स्वस्मात् चिन्मयधाम्नो भूमावतीय प्राणिमात्रमध्ये विचरति, प्राणिना कष्ट च दूरीकरोति। पुराणपरमेश्वरो वेदस्य ब्रह्मैव न केवल ज्ञेय ब्रह्म जीवस्य जगतश्च मूलकारण निगुण निर्विकारमद्वितीय चित्स्वरूपमेवास्ति, किन्तु स साकाररूपेण प्रत्यक्षविषय उपास्य सर्वासु अवस्थासु आश्रयणीय, करुणाप्रेमसहानुभूतिसम्पन्न शरणागताना दीनाना दु खिना आर्तत्राण तत्परश्चास्ति।

यत्र वेदाना डिण्डिमघोषोऽस्ति यद् ब्रह्म नामरूपाभ्या पर विद्यते तत्र पुराणानि त सवनामिन सर्वरूपिण सवभावमयञ्च वदन्ति। वेदस्यैव ब्रह्म, पुराणेषु असख्यै नामरूपभावै विभिन्नरूपै आत्मान प्रकटयति। तदेव ब्रह्म ब्रह्मा विष्णु शक्ति गणेश सूर्यादिश्चास्ति, तदेव राम कृष्णो वामनो नृसिह मत्स्यो वराहो वौद्धश्चास्ति तदेवेन्द्र आदित्यो यमो वरुण कुवेरोऽग्निश्चास्ति। यत्र वेदेषु ब्रह्म एकमेवास्ति तत्र पुराणेषु सवसम्प्रदायसिद्धाना विविधाना देवाना देवीनाञ्चोपासना स्वीकृत्य सर्वेषा माहात्म्य गौरव च गीतमस्ति। एकमेव परमात्मान विभिन्नसम्प्रदायानुसार विभिन्ननामरूपभावै वर्णयद्भि पुराणै सर्वे सम्प्रदाया एकत्वसूत्रे निवद्धा सर्वाणि धर्ममतसाधनप्रणाली-वैशिष्ट्यादीनि चाक्षुण्णानि स्थापयद्भि तेषामान्तरिका अभेदाश्च सुरक्षिता सन्ति।

पुराणानुसार सर्वे सम्प्रदाया विभिन्ननामरूपभावेषु एकस्यैव विश्वात्मन उपासना कृत्वा स्वीय जीवन कृतार्थं कुर्वन्ति। पुराणाना प्रभावेण भारतीय-धर्मजिज्ञासव तत्तत्सम्प्रदायेषु विभक्ता अपि एकस्य वैदिकस्य सनातनधर्मस्या-नुसरण कुर्वन्ति। विविधाना देवाना देवीनामुपासका सन्तोऽपि एकस्यैवा-द्वितीयस्य ब्रह्मण उपासका सन्ति। सवसम्प्रदायोपासका इद जानन्ति यद् वैष्णवा विष्णो विभिन्नैर्नामरूपभावै यमुपासन्ते, तमेव शैवा शिवस्य विभिन्ननामरूपभावै शाक्ताश्चोपासका कालीदुर्गाचण्डीभगवतीत्यादिरूपै तमेवाराधयन्ति। तत्तत्पुराणानि तत्तन्नामरूपलीलानामाश्रय कृत्वा एकस्यैव ब्रह्मणो विशिष्टाविर्भावस्य महिमान कीर्तयन्ति, विभिन्नोपासकसम्प्रदाय-हृदयानि चावजयन्ति।

पुराणै सर्वातीत ब्रह्म जडजगतो मानवसमाजमध्ये आनीय भगवता सह मनुष्याणा सवविध व्यवधान दूरीकृत्य मनुष्येषु देवत्वावबोधो भगवत्सत्तानु भूतिश्चोद्भाविता। पुराणना जगत् न केवल जडजगदेवास्ति किन्तु तत् सच्चि

दानन्दघनस्य भगवतो लीलाभूमिरस्ति। भगवान् विशुद्धेन सत्वमयेनाऽलौकिकेन देहेनाविर्भूय अस्मिन् देवश्लाघ्ये भवभीतिभञ्जनाथसमुद्भवभगवतीभागीरथीकालिन्दीसरयूनर्मदादिभि नदीभि परमपवित्रे भव्ये भारतभूभागे भ्रमन् सवत्र विशुद्धसत्वस्याविच्छिन्ना धारा प्रवाहयति। पुराणानि सवश्रेणीमनुष्यान् भगवत आविर्भाव लीला च दशयन्ति। पुराणद्वारा भारतवषस्यासख्याना नगर ग्राम-नदी वन-पर्वत सरोवर-सागरादीना ज्ञान भवति। पुराणेषु सर्वेषा कृते नैकमेव किमपि तीर्थं निश्चितमस्ति किन्तु भारतवषस्य सर्वेषु प्रान्तेषु पवित्राणि तीर्थानि सन्ति सवत्र च भगवतो लीलाऽभवत्। एवम् पुराणानि समस्ता भारतभूमि चिन्मयस्य भगवतो लीलाधामरूपेणोपस्थापयन्ति। पुराणाना कृपया एकैकस्य भारतवषवासिन कृते सर्वा भारतभूमि सत्कार्या स्नेहमयी वात्सल्यमयी आनन्दमयी जननीच पूज्या रक्षणीया चास्ति। अनया दृष्ट्या भारतभूमे दशनस्य सेवायाश्च शिक्षादान पुराणानामेव पवित्र कर्तव्यमस्ति।

पुराणेषु मानवजातेरितिहासो विशेषतश्च प्राचीनस्य भारतस्येतिवृत्त वर्णितमस्ति। तत्र कियतामुत्थान बहूना च पतन कवित्वपूणभाषाया मालोचितमस्ति। किन्तु अस्य वणनस्यान्तरिको दृष्टिकोण साधारणस्येतिहासस्य दृष्टिकोणात्पृथगस्ति। अत्र घटनानामुल्लेखमात्रमुद्देश्य नास्ति नापि राज्ञामुत्थानपतनयो समावेश पुराणाना प्रधान कार्यं विद्यते। एतत्तु पुराणाना दृष्टौ भगवल्लीलाया अङ्गमात्रमस्ति। पुराणेषु सृष्टिस्थितिप्रलयाना लीलाया भगवतो न्यायकरुणाप्रेम्णा विधानस्य जीवाना कर्मकलापस्य च वैचित्र्यपूर्णेतिहासाश्रयेण वर्णन विद्यते। मनुष्या मानवेतिहासस्य श्रवणमध्ययन च कृत्वा तत्र भगवल्लीलाया एवास्वाद कुर्वन्त्विति मुख्यमुद्देश्यमस्ति। एव पुराणै जगत्, जीवम्, ईश्वरञ्चैकरूपे प्रस्तुत्य समस्तस्य मानवजगत सस्कृतिरेकस्यामुन्नततरभूमिकाया प्रतिष्ठापिता।

आध्यात्मिकसाधनाय बहूनि स्तोत्रकवचसहस्रनामादीनि पुराणेषूपलभ्यन्ते। वेदेषु पुराणेषु प्रकृतेर्निरूपण विद्यते तत्र पुराणेषु अधिष्ठात्री देवीरूपेण प्रकृतेर्विशदीकरण कृतमस्ति। अस्मिन्नेवाधारे महर्षिभि स्मृतिग्रन्थेषु व्यवहारभागस्य प्राशस्त्य गीतमस्ति। तथाच वेदवेदाङ्गपुराणस्मृत्यादयो धर्मशास्त्राणि कथ्यन्ते। एवेषा श्रवणेन मननेन निदिध्यासनेन च प्राणिमात्रस्य अवश्य कल्याण भवति।

## पुराणानां विज्ञानोपयोगित्वम्

विशतिशताब्दी विज्ञानस्य मध्याह्न कथ्यते। इदानी विज्ञान चरम सीमानमुपगत श्रूयते। किन्तु अद्यत्वे यावन्ति विज्ञानानि उच्चभूमिकाया

मुपगतानि विद्यन्ते यावन्ति च अपूर्णानि सन्ति, तेषु एकमपि विज्ञान एतादृश नास्ति यस्योल्लेखो येन केनापि प्रकारेण सस्कृतवाङमये न स्यात्। सम्प्रति यावन्तोऽपि आर्थिक सामाजिक राजनैतिकादयो वादा उपलभ्यन्ते, तेषु कस्यचित् सक्षेपेण कस्यचन विस्तारेण कस्यचित् पूव पक्षरूपेण कस्यचन च निन्दारूपेणोल्लेखस्तु सस्कृतवाङमये विद्यत एव।

सस्कृतसाहित्ये पुराणेषु आध्यात्मिकाधिदैविकविषयाणा विवेचनेन सह आधिभौतिकवादस्यापि प्रचुरा सामग्री समुपलभ्यते। साम्प्रत भौतिकपदार्थानामनुसन्धानकर्तृभि महता परिश्रमेण कथञ्चित् सहारिकाया एवाणुशक्ते अन्वेषण कृत्वा परमाण्वस्त्रादिषु तस्या उपयोग विधाय आत्मनो धन्यतमान् मन्यमाना आश्चर्यचकितान् कुर्वन्ति समस्तान् मानवान्। परन्तु प्रजननात्मिकाया पालनात्मिकायाश्चाणुशक्तेर्ज्ञान नाधुना यावज्जात तेषाम्। सस्कृत वाङमये तु तद्विज्ञान प्रतिपद प्राप्यते। यद्यत्र विषये विशेष ध्यान प्रदाय विशिष्टै विद्वद्भि सह विमश विधाय समुपलभ्यमानै सूक्ष्मयन्त्रादिभि प्रत्यक्षीकरणाय अनुसन्धान क्रियेत, तर्हि अधुनापि निश्चप्रच विश्वस्य महानुपकारो भवितुमर्हति।

सौन्दयलहर्यां महाशक्तित परमाणूनामुत्पत्तिकल्पनाया दृष्टिदानेनानायासं प्रजनन पालन सहारकारिका ब्राह्मी वैष्णवी रौद्री चेति त्रिविधा अणुशक्तय प्रत्यक्षगोचरी भवन्ति। यथा—

तनीयास पासु तवचरणपङ्केरुहभवम्
विरञ्चि सचिन्वन् विरचयति लोकानविकलम्।
वहत्येन शौरि कथमपि सहस्रेण शिरसा
हर सक्षुभ्यैन भजति भसितोद्धूलनविधिम्॥

अनेन पद्येनेद व्यज्यते यद् आकाशात्मिकाया अव्यक्तशक्तित अणूना वृष्टिरजायत। तत सृजतात्मकानामणूना सचय कृत्वा लोकविधाता ब्रह्मा अखिल लोक सृजति। पालनात्मकानणून् सगृह्य लोकपालको भगवान् विष्णु समस्त विश्व पालयति। सहारात्मकैश्च अणुभि भूतभावनो भगवान् सदाशिव सहरति सकल ससारम्।

सस्कृतवाङमयप्राणभूतेभ्य पुराणेभ्य एव अणुशक्ते ज्ञान प्राप्य अलौकिकज्ञानसपन्नो भगवानक्षपाद कणादो मुनि स्वकीये वैशेषिकदर्शने चेष्टाहीनाना परमाणूना परस्पर सम्पर्केण द्रव्य गुण कर्म सामान्य विशेष समवायाभावाना सप्तानां पदार्थानामुत्पत्तिसिद्धान्त स्थिर कृत्वा लोकोत्तर चमत्कार प्रदर्शितवान्।

परमाणुलक्षणञ्च—

जालान्तगते मानौ सूक्ष्म यद् दृश्यते रज ।
तस्य षष्ठतमो भाग परमाणुरिहोच्यते ।।

दार्शनिकाना नये परमाणवो नित्या अतिसूक्ष्माश्च सन्ति । सूक्ष्मत्वादेव परमाणवो नास्माक स्थूलदृशा मानवाना प्रत्यक्षगोचरा भवन्ति। किन्तु सर्वशक्तिमत अघटितघटनापटीयस परमेश्वरस्य अलौकिकशक्तिसम्पन्नाना योगिना च परमाणूना प्रत्यक्ष जायते। प्राणिनामदृष्टवशात् परमाणूना परस्पर सम्पर्केण तत्तत्कार्यमुत्पद्यते। परमाणवो द्विधा भवन्ति—कारणरूपा कार्यरूपाश्च। तत्र कारणरूपा परमाणवो नित्या, अनित्याश्च कार्यरूपा। तथाच कारणरूपाणा परमाणूनामप्रत्यक्षत्वेऽपि कार्यरूपेण परिणताना तेषा तु प्रत्यक्ष भवत्येव।

अत एव परमाण्वस्त्रे उपलभ्यमाना कार्यरूपा परमाणवो न पदार्थान्तर भवितुमर्हन्ति, कारणभूतेषु परमाणषु एव तेषामन्तर्भावस्वीकारान्नकोऽपि शङ्कापङ्ककलङ्कलेशस्यावकाश सम्भवति।

स्कन्दपुराणे चैका कथोपलभ्यते यद् आसीद् वकरी नाम्नी एका राजकुमारी, यस्या मुख वकरीमुखमिव आसीत्। सा शारीरिकनिर्माणकारण ज्ञात्वा वैज्ञानिकक्रियाभि तस्मिन्नेव शरीरे वकरीमुख मानवमुखरूपे परिवर्त्य विधुवदनी बभूव। तस्या अपरेऽपि आसन् अष्टौ भ्रातर। तज्जनकश्च समस्त विश्व नवसु खण्डेषु विभज्य प्रत्येकस्मै एकमेक खण्ड प्रादात्। तत कालादेव भारतवर्षमिद नव खण्डात्मक प्रसिद्धमभवत्।

तत्र प्रत्येकखण्डे विविधप्रकाराणा भूगर्भगताना धातूनाम्, पुण्यसलिलाना सरोवराणाम्, परिपूतजलाना नदीनाम्, सघनाना वनानाम्, दुर्गमाणा गिरीणाम्, सर्वसिद्धिप्रदायकाना सिद्धपीठानाम्, महतो मरुस्थलस्य, शस्यश्याम लस्य भूभागस्य च पर्याप्त वर्णन विद्यते। एव व्योमवर्तिना ग्रहनक्षत्रादीना दूरस्थिति–गति–शिशुमारचक्र–ध्रुवस्थान–दक्षिणायनोत्तरायणवर्षर्तु–मास–पक्ष दिन घटी पल-विपल-निमेषादीना सूक्ष्मतमो विचारो वर्तते। येन भूगोलखगोल विषयक प्रचुर ज्ञान विधाय ब्राह्मी वैष्णवीरौद्रीणामणुशक्तीना विषयेऽनुसन्धान सफल भवितुमर्हति। यदीदानीमपि अणुवीक्षणसमिति उपलब्धै आधुनिकै साधनै अनेकप्रकाराणामणूनामन्वेषणाय पुराणमर्मज्ञै सस्कृतरहस्यविद्भि विशिष्टै विद्वद्भिरेवै सम्यक् सहयोग विधाय प्रचुर प्रयत्न क्रियेत, तदा सम्भावये पुराणेतिहासकालिक वैज्ञानिक महत्वमिदानीमपि पुन प्राप्तु शक्येत। येन सकलस्य लोकस्य वास्तविक कल्याण सम्भवेत्। पौराणिकी

कथा आश्रित्यैव कालिदासादयो बहवो महाकवयोऽप्यनेकानि महाकाव्यानि नाटकादीनि च विरचय्यात्मनो धन्यान् मन्यन्ते। यैश्च महानुपकारो भवति संस्कृतसाहित्यस्य, वर्धते च गौरवमुत्तरोत्तरम्।

## पुराणानां प्राचीनत्वम्

किं पुराणानि अर्वाचीनानि प्राचीनानि वा? इति विविच्यमाने प्रथमं तावत्पुराणशब्दव्युत्पत्तौ ध्यानं देयम्।

पुराभवमिति विग्रहे "सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" इति पाणिनीयसूत्रेण ट्युप्रत्यये निपातनात् तुडभावे "युवोरनाकौ" इति अनादेशे णत्वे च" कृते निष्पद्यते पुराणशब्दः। यद्वा पुरा नीयत इत्यर्थे पुरापूर्वकणीञ् धातोः डप्रत्यये कृते सिद्ध्यति पुराणशब्दः। पुराणं कस्मात् पुरा नवं भवतीति निरुक्ते च यास्कमुनिः। एवञ्च पुराणशब्दस्य पुरातनपर्यायवाचित्वेऽपि विशेषरूपेण व्यासकृताष्टादशग्रन्थेषु एव पुराणशब्दो रूढः जातोऽस्ति।

ननु पुराणेषु अर्वाचीनकथानामुपलम्भात् तेषां प्राचीनत्वं न सम्भवतीति वदतां पाश्चात्योपनेत्रधारिणामाधुनिकानां मतं युक्तमिति चेन्न, वक्ष्यमाणानाम् अथर्ववेद-शतपथब्राह्मणोपनिषद् भाष्य गृह्यसूत्र स्मृति-रामायण महाभारतादि वाक्यानां विद्यमानत्वेन पुराणानां प्राचीनत्वे क्षोदक्षेमासम्भवात्। तथाहि—

अथर्ववेदे—ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिविश्रिताः॥ ११।७।२५

शतपथब्राह्मणे—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः, पुराणं विद्या उपनिषदः, इत्यादि।

छान्दोग्योपनिषदि—'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं वेदानां वेदम्' ।७।१।२

बृहदारण्यकोपनिषदि—'अरेऽस्य महतो भूतस्य निश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः इतिहासः पुराणम्' ।२।४।११

आश्वलायनगृह्यसूत्रे—"इतिहासपुराणे अमृतस्य कुल्या।"

याज्ञवल्क्यस्मृतौ—पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ १।२

वाल्मीकीये— "इत्युक्त्वाऽन्तःपुरद्वारमाजगाम पुराणवित्।" २।५।२७

महाभारते च—अष्टादशपुराणानि कृत्वा सत्यवतीसुतः।
पश्चाद्भारतमाख्यानं चक्रे तदुपबृंहितम्॥

एभि प्रमाणै सिद्धयति यत्पुराण प्राचीनम्, नित्यम्, अपौरुषेयञ्चास्ति। अत वेद इव तस्यापि समादर करणीय । किञ्चमत्स्यपुराणे —

पुराण सवशास्त्राणा प्रथम ब्रह्मणा स्मृतम्।
अन तर च वक्त्रेभ्यो वेदास्तस्य विनिर्गता ॥ ५३।३
आख्यानस्यास्य विषये पुराण वर्तते द्विजा ।
अन्तरिक्षस्य विषये प्रजा इव चतुर्विधा । आ० प० २।३८६

इति मत्स्य पद्मपुराणवचनात्पुराणस्य वेदेभ्योऽपि प्राचीनत्वमनादित्व च सिद्धयति। एवञ्च यथा ब्रह्मण सकाशात् महर्षिहृदयेषु वेदा आविर्भूता, तथैव पूर्वं तेषामेव महर्षीणा हृदयेषु ईश्वरानुग्रहेण पुराणमपि प्रादुरभवत्।

तदनन्तर पराशरमुनिना सत्यवत्यामुत्पन्नेय महर्षिणा व्यासेन यथा वेदस्यैकस्य चत्वारो भेदा कृता, तथैव पुराणस्यापि अष्टादश भेदा कृता। साम्प्रत प्रचलितानि अष्टादश पुराणानि प्राचीनतमस्यैकस्य पुराणस्याशय गृहीत्वा व्यासेन निर्मितानि सन्ति। आदौ व्यासेन पुराणेषु सर्वे विषया यथा-योग्य निश्चिता ,पश्चात्तस्य शिष्यै सूतादिभि यत्र यत्र श्रावितानि, प्रश्नोत्तराणि च कृतानि, तान्यपि सगृह्य सकलितानि। तथाचोक्त शिवपुराणे स्कन्दपुराणस्य रेवाखण्डेऽपि—

पुराणमेकमेवासीदस्मिन् कल्पा तरे नृप ! ॥
त्रिवग साधन पुण्य शतकोटिप्रविस्तरम् ॥
कालेनाग्रहण दृष्ट्वा पुराणस्य ततो नृप ! ॥
व्यासरूपो विभुर्भूत्वा सहरेद् स युगे युगे ॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रभाषते ॥
अद्यापि देवलोके तच्छतकोटिप्रविस्तरम् ॥
तदर्थोऽत्र चतुर्लक्ष सक्षेपेण निवेशित ॥
पुराणानि दशाष्टौ च साम्प्रत तदिहोच्यते ॥ १।२४ २८२

अपि च पद्मपुराणे—

प्रवृत्ति सर्वशास्त्राणा पुराणस्याभवत्तदा ॥
कलिना ग्रहण दृष्ट्वा पुराणस्य तदा प्रभु ॥
व्यासरूपी तदा ब्रह्मा सग्रहाथ युगे युगे ॥
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे पुन ॥
तदष्टादशधा कृत्वा भूर्लोकेऽस्मिन् प्रकाशते ॥

देवीभागवते च--

द्वापरे द्वापरे विष्णुर्व्यासरूपेण सवदा ॥
वेदमेक तु कुरुते बहुधा हितकाम्यया ॥
अल्पायुषोऽल्पबुद्धींश्च विप्रान् ज्ञात्वा कलावपि ॥
पुराणसहिता पुण्या कुरुतेऽसौ युगे युगे ॥ १।३।१९-२०

किञ्च—इह लोकहितार्थाय सक्षिप्ता परमर्षिणा ।

## पुराणानां परिचयः

सृष्टे आरम्भकालत प्रलयपर्यन्त समस्तस्य विश्वस्य क्रमवद्धस्यैतिहासस्य निर्देशकाना भारतीयसस्कृते प्रतीकाना वैदिकस्य धर्मस्य परिपोषकाणा सर्वविषयपरिपूर्णानामष्टादशाना पुराणाना परिचयो विष्णुपुराणस्य तृतीयेंऽशे एव प्रदत्तो विद्यते—

तथा श्रीमद्भागवतस्य द्वादशस्कन्धे सप्तमेऽध्याये च एव प्रदत्तो विद्यते--

ब्राह्म पाद्म वैष्णव च शैव लिङ्ग सगारुडम् ।
नारदीय भागवतमाग्नेय स्कन्दसज्ञितम् ॥ २३
भविष्य ब्रह्मवैवर्त मार्कण्डेय सवामनम् ।
वाराह मात्स्यकौर्म च ब्रह्माण्डाख्यमिति त्रिषट् ॥ २४

विष्णुपुराणेऽपि—

(१) ब्रह्मपुराणम् (२) पद्मपुराणम् (३) विष्णुपुराणम् (४) शिवपुराणम् (५) भागवतपुराणम् (६) नारदीयपुराणम् (७ मार्कण्डेयपुराणम् (८) अग्नि पुराणम् (९) भविष्यपुराणम् (१०) ब्रह्मवैवर्तपुराणम् (११) लिङ्गपुराणम् (१२) वाराहपुराणम् (१३) स्कन्दपुराणम् (१४) वामनपुराणम् (१५) कुर्म-पुराणम् (१६) मत्स्यपुराणम् (१७) गरुडपुराणम् (१८) ब्रह्माण्डपुराणम् ।

यद्यपि तत्तत्पुराणेषु तेषा क्रमस्थितौ विदुषा मतभेदो वर्तते, तथापि एतानि व्यासोक्तानि अष्टादशसवमान्यानि पुराणानि सन्ति, एतानि महापुराणान्यपि उच्यन्ते ।

प्रथम ब्रह्मपुराणमन्तिमश्च ब्रह्माण्डपुराणमिति निश्चप्रच विद्यते । एतेनेद सूच्यते यत्सृष्ट्यादौ ब्रह्मण एवाविर्भूय सवमिद जगत्प्रलये ब्रह्मणि एव लीयते । ब्रह्मसृष्टि विवणयन्ति एतानि महापुराणानि ब्रह्मण आरभ्यास्माक ज्ञान ब्रह्म पर्यन्त चोपस्थापयन्ति ।

देवीभागवतेऽष्टादशाना पुराणाना सक्षेपेणैव गणना कृतास्ति--

मद्वय भद्वय चैव ब्रत्रय वचतुष्टयम् ।
अनापलिङ्गकूस्कानि पुराणान्यनुपूवश ॥ १।२।३

अष्टादशमहापुराणनि कलिद्वापरयो सन्धौ पराशरात्सत्यवत्या जातेन भगवता वेदव्यासेन निर्मितानि सन्ति। एतत्समानि एव १८ उपपुराणानि १८ औपपुराणानि च सन्ति। येषा रचना एतेषा महापुराणानामेवाधारेऽभवत्। प्राक्तना विभिन्ना विद्वास पुराणानामाशयमादाय उपपुराणानि औपपुराणानि च रचितवन्त । किन्तु कुत्रचित् कथा सूक्ष्मीकृता सन्ति, कुत्रचित् त्यक्ता सन्ति, कुत्रचिच्च नवीनता नेतु कथासु परिवतन कृत विद्यते, कुत्रचिच्च कथासु वैलक्षण्यमपि सम्पादितमस्ति। एवमपि एतेषा मूलमष्टादशपुराणान्येव सन्ति। श्रीमद्भागवतस्य प्रसिद्धटीकाकतु श्रीधरस्वामिन प्रधानशिष्येण नीलकण्ठाचार्येण देवीभागवतस्य टीकायामेतत् स्पष्टीकृतमस्ति। एकादश-शताब्द्यामुत्पन्नेन श्रीषडगुरुशिष्येण स्ववेदार्थदीपिकाया नृसिहोपपुराणस्य बहव श्लोका उद्धृता सन्ति। किञ्च प्रसिद्धो भारतभ्रमणकर्ता यवनजातीयो विद्वान् अल्वेरुणी स्वकीये भारतभ्रमणवृत्तान्ते आदित्य सोम साम्बनृसिहाद्युपपुराणाना मुल्लेख कृतवानस्ति। एतेन स्पष्ट प्रतीयते यत् तस्मिन् समये एतेषामुपपुराणा-नामौपपुराणानामपि विद्वद्वर्गे समादर आसीत्। अतस्तेषामपि प्राचीनत्वे सन्देहो नास्ति।

**१८ उपपुराणानि यथा कूर्मपुराणस्योत्तरार्द्धे—**

आद्य सनत्कुमारोक्त नारसिहमथापरम्।
तृतीय स्कान्दमुद्दिष्ट कुमारेण तु भाषितम्॥
चतुर्थं शिवधर्माख्य साक्षान्नन्दीशभाषितम्।
दुर्वाससोक्तमाश्चर्यं नारदोक्तमत परम्॥
कपिल वामन चैव तथैवोशनससेवितम्।
ब्रह्माण्ड वारुण चाथ कालिकाह्वयमेव च।
माहेश्वर तथा साम्ब सौर सर्वार्थसञ्चयम्।
पराशरोक्तमपर मारीच भास्कराह्वयम्॥ १।१७ २०

**१८ औपपुराणानि च यथा बृहद्विवेके—**

आद्य सनत्कुमार, च नारदीय वृहच्च यत्।
आदित्य मानव प्रोक्त नन्दिकेश्वरमेव च॥
कौर्मं भागवत ज्ञेय वाशिष्ठ भागव तथा।
मुद्गल कल्किदेव्यौ च महाभागवत तत॥
बृहद्धर्मं परानन्द वह्नि पशुपति तथा।
हरिवंश ततो ज्ञेयमिदमौपपुराणकम्॥

## पुराणानां सात्त्विक-राजस-तामसभेदाः—

पद्मपुराणे भविष्यपुराणे च पुराणाना सात्त्विकराजस-तामसभेदाद् भेदत्रय कृतमस्ति। तत्र पद्मपुराणानुसार सात्विकराजसतामसभेदादष्टादश पुराणाना त्रिधा वर्गीकरण विद्यते। तत्र ६ सात्त्विकानि, ६ राजसानि, ६ तामसानि च पुराणानि सन्ति। तत्र तामसेषु पुराणेषु मत्स्यपुराणस्य कूर्मपुराणस्य, लिङ्गपुराणस्य, शिवपुराणस्य, स्कन्दपुराणस्य, अग्निपुराणस्य च गणनास्ति—

मात्स्य कौम तथा लैङ्ग शैव स्कान्द तथैव च।
आग्नेय च षडेतानि तामसानि निबोधत ॥ उ० ख० २३६।१७

सात्त्विकपुराणानि सन्ति विष्णुपुराणम्, नारदीयपुराणम्, श्रीमद्भागवतम्, गरुडपुराणम्, पद्मपुराणम्, वाराहपुराणञ्च—

वैष्णव नारदीय च तथा भागवतं शुभम्।
गारुड च तथा पाद्म वाराह शुभदर्शने ॥

सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै। २३६।१९

राजसानि पुराणानि च सन्ति, ब्रह्माण्डपुराणम्, ब्रह्मवैवर्तम्, मार्कण्डेय-पुराणम्, भविष्यपुराणम्, वामनपुराणम्, ब्रह्मपुराणञ्च—

ब्रह्माण्ड ब्रह्मवैवर्तं मार्कण्डेय तथैव च।
भविष्य वामन ब्राह्म राजसानि निबोधत ॥ २३६।२०

सात्त्विकादिभेदेन पुराणाना त्रिधा वर्गीकरणस्येद तात्पर्यं नास्ति यत् सात्त्विकानि पुराणानि श्रेष्ठानि, राजसानि मध्यानि, तामसानि च निकृष्टानि सन्ति, सात्त्विकाना पुराणानामध्ययनेन मोक्षप्राप्ति, राजसानि पुराणानि स्वर्गं प्रदानि सन्ति, तथा तामसाना पुराणानामनुशीलनेन तामसीप्रवृत्तिर्जायते, ययाऽधोगतिभवति, तथा चोक्त पद्मपुराणे—

सात्त्विका मोक्षदा प्रोक्ता राजसा स्वगदा शुभा।
तथैव तामसा देवि! नित्यप्राप्तिहेतव ॥ ५।२३६।२१

अपि तु सत्त्वरजस्तमासि त्रीणि समस्तस्य विश्वस्योपादानभूतानि सन्ति। एतान्यादाय परमेश्वरो ब्रह्मविष्णुशिवरूपै त्रिधा परिणतो भवति। तत्र समस्तस्य ब्रह्माण्डस्योत्पादको ब्रह्मा, विष्णु पालक, शिवश्च सहारकोऽस्ति। अत एवोक्तम्—

"एका मूर्तिस्त्रयो देवा ब्रह्मविष्णुमहेश्वरा"

पद्मपुराणे सात्त्विकानि पुराणानि मोक्षप्रदानि सन्ति। राजसानि पुराणानि स्वर्गप्रदानि विद्यन्ते। तामसपुराणानि च नरकप्रदानि कथ्यन्ते। तथाहि—

सत्त्विका मोक्षदा प्रोक्ता राजसा स्वर्गदा शुभा ।
तथैव तामसा देवि ! नित्यप्राप्तिहेतव ॥ ६।२६३।८५

भविष्यपुराणानुसार राजसपुराणेषु प्राय कमकाण्डस्य प्रतिपादन भवति तथा तामसपुराणानि शाक्तपरायणानि भवन्ति ।

राजसा षटस्मृता वीर कमकाण्डतया भुवि ।
तामसा षट् स्मृता प्राज्ञे शक्तिधर्मपरायणा ।
( भवि पु ३।३।२८,१३ १५ )

## पुराणप्रादुर्भावक्रमः

सर्वपापहर पुण्य पवित्र च यशस्वि च ।
ब्रह्मा ददौ शास्त्रमिद पुराण मातरिश्वने ॥
तस्माच्चोशनसा प्राप्त तस्माच्चापि वृहस्पति ।
वृहस्पतिस्तु प्रोवाच सवित्रे तदनन्तरम् ॥
सविता मृत्यवे प्राह मृत्युश्चन्द्राय वे पुन ।
इन्द्रश्चापि वशिष्ठाय सोऽपि सारस्वताय च ॥
सारस्वतस्त्रिधाम्ने च त्रिधामा च शरद्वते ।
शरद्वतस्त्रिविष्टाय सोऽन्तरिक्षाय दत्तवान् ॥
वर्षिणे चान्तरिक्षो वे सोऽपि त्र्य्यारुणाय च ।
त्र्य्यारुणो धनञ्जये स च प्रादात्कृतञ्जये ॥
कृतञ्जयात्तृणजयो भरद्वाजाय सोऽप्यथ ।
गौतमाय भरद्वाज सोऽपि निर्यन्तरे पुन ॥
निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय च ।
स ददौ सोममुष्माय स ददौ तृणबिन्दवे ॥
तृणबिन्दुस्तु दक्षाय दक्ष प्रोवाच शक्तये ।
शक्त पराशरश्चापि गर्भस्थ श्रुतवानिदम् ॥
पराशराज्जातुकर्णस्तस्माद् द्वैपायन प्रभु ।
द्वैपायनात्पुनश्चापि मया प्रोक्त द्विजोत्तमा ! ॥

वैशम्पायन उवाच—

मया वे तत्पुन प्रोक्त पुत्रायामितबुद्धये ।
इत्येव वाचा ब्रह्मादिगुरुणा समुदाहृता ॥ ( वायुपुराणम् )



## भाषाविमर्शः

भरद्वाजसहितायां भाषातत्वस्याधारे पौराणिकभाषाया त्रिधा वर्गीकरण विद्यते--(१) समाधिभाषा (२) लौकिकीभाषा (३)परकीयभाषा च। तथाहि—

समाधिभाषा प्रथमा लौकिकीति तथापरा ।
तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता ॥

आसा त्रिविधाना भाषाणा ज्ञानमन्तरेण न केऽपि वास्तविक पौराणिक रहस्यमवगन्तु प्रभवेयु । तत्र समाधिबोध्यविषया समाधिभाषया समीयन्ते— यथात्मप्रकृतिकर्मादिस्वरूपाणि धर्माधर्मनिणयश्च यदा किल लौकिकरीत्या समाधिगम्यरहस्यानि रूपकालङ्कारे वणयित्वा श्रोतृवृन्दवुद्धय सन्मार्गे प्रतिष्ठाप्यन्ते, तदा सा लौकिकी भाषा कथ्यते, यथा भगवतो जन्मकमविवाहविलासादिवृत्तान्तस्य मध्यमाधिकारिणा कृते लौकिकदिशा वर्णनम् । तृतीया च परकीया समाधिलौकिकभाषागोचरान् विषयान् द्रढयितु युगान्तरीय कल्पान्त रीय च घटनाचक्र गाथारूपेण प्रकाशयति । एव निरुक्तेऽपि यास्काचार्येण त्रिधा भाषा नामान्तरेण स्मृता —

"ता त्रिविधा ऋच परोक्षकृता प्रत्यक्षकृता आध्यात्मिक्यश्च ।"





अष्टादशपुराणाना नाम सख्या तथा क्रम ।
प्रतिपाद्याश्च विषया श्रवणादिफल तत ॥
सक्षेपेण प्रदीयन्ते बुधा पश्यन्तु सम्मुदा ।
किं किं तत्त्व पुराणेषु वततेऽत्र मनोहरम् ॥

## पुराणानां समीक्षा

# १—ब्रह्मपुराणम्

अष्टादशसु पुराणेषु ब्रह्मपुराण प्रथम पुराण प्रोच्यते । अत्र द्वौ भागौ स्त, पूर्वभाग उत्तरभागश्च । अत्र २४५ अध्यायेषु निम्नाङ्किता विषया सन्ति । इद श्रीमद्भागवत विष्णु शिव ब्रह्मवैवत मार्कण्डेय नारदीयपुराणानुसार दशसहस्र ( १०००० ) सख्याक मत्स्यपुराणानुसारञ्च त्रयोदशसहस्र (१३०००) सख्याकमस्ति एतत्परिचयश्चैव विद्यते—

पुराणानि दशाष्टौ च साम्प्रत तदिहोच्यते ।
नामतस्तानि वक्ष्यामि शृणुध्व मुनिसत्तमा ॥
ब्रह्मणाऽभिहित पूर्वं यावन्मात्रं मरीचये ।
ब्राह्म त्रिदशसाहस्र पुराण परिकीर्त्यते ॥
( मत्स्यपुराणे ५३ अध्याय )

ब्राह्म पुराण तत्रादौ सर्वलोकहिताय वै ।
व्यासेन वेदविदुषा समाख्यातं महात्मना ॥

तद्वै सवपुराणाग्र्य धर्मकामार्थमोक्षदम् ।
नानाख्यानेतिहासाढ्य दशसाहस्रमुच्यते ।।
( नारदीयपुराणे ९२ अध्याय )

**पूर्वभागस्य प्रमुखा विषयाः**

देवानामसुराणाञ्च यत्रोत्पत्ति प्रकीर्तिता ।
प्रजापतीनाञ्च तथा दक्षादीना मुनीश्वर ! ।।
ततो लोकेश्वरस्यात्र सूर्य्यस्य परमात्मन ।
वशानुकीत्तन पुण्य महापातकनाशनम् ।।
तत्रावनार कथित परमानन्दरूपिण ।
श्रीमतो रामचन्द्रस्य चतुर्व्यूहावतारिण ।।
ततश्च सोमवशस्य कीर्त्तन यत्र वर्णितम् ।
कृष्णस्य जगदीशस्य चरित कल्मषापहम् ।।
द्वीपानाञ्चैव सिन्धूना वर्षाणाञ्चाप्यशेषत ।
वर्णन यत्र पातालस्वर्गाणाञ्च प्रदृश्यते ।।
नरकाणा समाख्याने सूर्य्यस्तुतिकथानकम् ।
पार्वत्याश्च तथा जन्म विवाहश्च निगद्यते ।।
दक्षाख्यान तत प्रोक्तमेकाम्रक्षेत्रवर्णनम् ।
पूवभागोऽयमुदित पुराणस्यास्य मानद ! ।।

**उत्तरभागस्य च प्रधानविषयाः**

अस्योत्तरे विभागे तु पुरुषोत्तमवणनम् ।
विस्तरेण समाख्यात तीथयात्राविधानत ।।
अत्रैव कृष्णचरित विस्तरात् समुदीरितम् ।
वर्णन मम लोकस्य पितृश्राद्धविधिस्तथा ।।
वर्णाश्रमाणा धर्माश्च कीर्त्तिता यत्र विस्तरात् ।
विष्णुधर्मयुगाख्यान प्रलयस्य च वर्णनम् ।।
योगाना च समाख्यान साख्यानाञ्चाऽपि वणनम् ।
ब्रह्मवादसमुद्देश पुराणस्य च सशमम् ।
एतद् ब्रह्मपुराणन्तु भागद्वयसमाचितम् ।।
वर्णित सर्वपापघ्न सर्वसौख्यप्रदायकम् ।।

**अस्य श्रवणफलमितिकर्तव्यतानिर्देशो यथा**

सूतशौनकसम्वाद भुक्तिमुक्तिप्रदायकम् ।
लिखित्वैतत्पुराण यो वैशाख्या हेमसयुतम् ।।

जलधेनुयुतश्चापि भक्त्या दद्याद् द्विजातये ।
पौराणिकाय सम्पूज्य वस्त्रभोज्यविभूषणे ॥
स वसेद् ब्रह्मणो लोके यावच्चन्द्रार्कतारकम् ।
य ठेपच्छृणुयाद्वाऽपि ब्रह्मानुक्रमणी द्विज ! ॥
सोऽपि सवपुराणस्य श्रोतुवक्तु फल लभेत् ॥
शृणोति य पुराणन्तु ब्राह्म सव जितेन्द्रिय ।
हविष्याशी च नियमात् स लभेद् ब्रह्मण पदम् ॥
किमत्र बहुनोक्तेन यद् यदिच्छति मानव ।
तत्सर्वं लभते वत्स ! पुराणस्यास्य कीत्तनात् ॥

अस्मिन्पुराणे सर्वेषु पात्रेषु पुराणज्ञो विद्वान् श्रेष्ठ सत्पात्र प्रोच्यते । तथा-चोक्तम्—

सर्वेषामेव पात्राणा श्रेष्ठ पात्र पुराणवित् ।
पतनात्त्रायते यस्मात्तस्मात्पात्रमुदाहृतम् ॥
ब्राह्मणेषु पुराणेषु गगाया गोसु पिप्पले ।
नारायणधिया पुम्भिर्भक्ति कार्या ह्यहैतुकी ॥

●

## २—पद्मपुराणम्

पद्मपुराणे पञ्च खण्डा सन्ति, (१) सृष्टिखण्ड (२) भूमिखण्ड (३) स्वर्गखण्ड (४) पातालखण्ड (५) उत्तरखण्डश्च । अत्र क्रमश. ८२, १२५, ३९, ११३, २८२ सकलनया ६४१ अध्यायेषु निम्नाङ्किता विषया सन्ति । त्पञ्चपञ्चाशत्सहस्र (५५००००) सख्याकमस्ति । एतत्परि-यश्चैवमस्ति—

एपदेव यदा पद्मं ह्यभूद्धैरण्मय जगत् ।
वृत्तान्तादय तद्वत् पाद्ममित्युच्यते बुधै ॥
पाद्म तत्पञ्चपञ्चाशत् सहस्राणीह कथ्यते ।
( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच—

शृणु पुत्र ! प्रवक्ष्यामि पुराण पद्मसज्ञकम् ।
महत्पुण्यप्रद नृणा शृणुता पठता मुदा ॥
यथा पञ्चेन्द्रिय सर्वं शरीरीति निगद्यते ।
तथेद,पञ्चभि खण्डैरुदित पापनाशनम् ॥

## (१) सृष्टिखण्डस्य प्रधानविषयाः

पुलस्त्येन तु भीष्माय सृष्ट्यादिक्रमतो द्विज ॥
नानाख्यानेतिहासाद्यैर्यत्रोक्तो धर्मविस्तर ॥
पुष्करस्य च माहात्म्य विस्तरेण प्रकीर्तितम् ।
ब्रह्मयज्ञविधानञ्च वेदपाठादिलक्षणम् ।
दानाना कीत्तन यत्र वृत्तानाञ्च पृथक पृथक ।
विवाह शैलजायाश्च तारकाख्यानक महत् ॥
माहात्म्यञ्च गवादीना कीर्त्तित सवपुण्यदम् ।
कालकेयादिदैत्याना वधो यत्र पृथक् पृथक ॥
ग्रहणामर्चन दान यत्र प्रोक्त द्विजोत्तम ! ।
तत्सृष्टिखण्डमुद्दिष्ट व्यासेन सुमहात्मना ॥

## (२) भूमिखण्डस्य प्रधानविषयाः

पितृमात्रादिपूज्यत्वे शिवशर्मकथा पुर ।
सुव्रतस्य कथा पश्चात् वृत्रस्य च वधस्तथा ॥
पृथोर्वेणस्य चाख्यान धर्माख्यान तत परम् ।
पितृशुश्रूषणाख्यान नहुषस्य कथा तत ॥
ययातिचरितञ्चैव गुरुतीर्थनिरूपणम् ।
राज्ञा जैमिनिसम्वादो बह्वाश्चयकथायुत ॥
कथा ह्यशोकसुन्दर्या हुण्ड दैत्यवधाचिता ।
कामोदकाख्यानक तत्र विहुण्डवधसयुतम् ॥
कुञ्जुगस्य च सम्वादश्च्यवनेन महात्मना ।
सिद्धाख्यान तत प्रोक्त खण्डस्यास्य फलोहनम् ।
सूतशौनकसम्वाद भूमिखण्डमिद स्मृतम् ।

## (३) स्वर्गखण्डस्य प्रमुखविषयाः

ब्रह्माण्डोत्पत्तिरुदिता यत्र्षिभ्यश्च सौतिना ।
सभूमिलोकसस्थान तीर्थाख्यान तत परम् ॥
नर्मदोत्पत्तिकथन तत्तीर्थाना कथा पृथक् ।
कुरुक्षेत्रादितीर्थाना कथा पुण्या प्रकीर्तिता ॥
कालिन्दीपुण्यकथन काशीमाहात्म्यवणनम् ।
गयायाश्चैव माहात्म्य प्रयागस्य च पुण्यकम् ॥
वर्णाश्रमानुरोधेन कर्मयोगनिरूपणम् ।
व्यासजैमिनिसम्वाद पुण्यकर्मकथाचित ॥

समुद्रमथनाख्यानं व्रताख्यानं ततः परम् ।
ऊर्जपञ्चाहमाहात्म्यं स्तोत्रं सर्वापराधनुत् ॥
एतत्स्वर्गाभिधं विप्र ! सर्वपातकनाशनम् ।

**(४) पातालखण्डस्य विषयाः**

रामाश्वमेधे प्रथमं रामराज्याभिषेचनम् ।
अगस्त्याद्यागमश्चैव पौलस्त्यान्वयकीर्त्तनम् ॥
अश्वमेधोपदेशश्च हयचर्य्या ततः परम् ।
नानाराजकथाः पुण्या जगन्नाथानुवर्णनम् ॥
वृन्दावनस्य माहात्म्यं सर्वपापप्रणाशनम् ।
नित्यलीलानुकथनं यत्र कृष्णावतारिणः ॥
माधवस्नानमाहात्म्ये स्नानदानार्च्चने फलम् ।
म्वादो राजदूतानां कृष्णस्तोत्रनिरूपणम् ।
शिवशम्भुसमायोगो दधीच्याख्यानकन्ततः ॥
भस्ममाहात्म्यमतुलं शिवमाहात्म्यमुत्तमम् ।
देवरातसुताख्यानं पुराणज्ञप्रशंसनम् ॥
गौतमाख्यानकञ्चैव शिवगीता ततः स्मृता ।
कल्पान्तरी रामकथा भारद्वाजाश्रमस्थितौ ॥
पातालखण्डमेतद्धि श्रृण्वतां ज्ञानिनां सदा ।
सर्वपापप्रशमनं सर्वाभीष्टफलप्रदम् ॥

**(५) उत्तरखण्डस्य विषयाः**

पर्वताख्यानकं पूर्वं गौर्यै प्रोक्तं शिवेन वै ।
जालन्धरकथा पश्चात् श्रीशैलाद्यनुकीर्त्तनम् ॥
सागरस्य कथा पुण्या ततः परमुदीरिता ।
गंगाप्रयागकाशीनां गयायाश्चाधिपुण्यकम् ॥
आम्लादिदानमाहात्म्यं तन्महाद्वादशीव्रतम् ।
चतुर्विंशैकादशीनां माहात्म्यं पृथगीरितम् ॥
विष्णुधर्मसमाख्यानं विष्णुनामसहस्रकम् ।
कार्तिकव्रतमाहात्म्यं माघस्नानफलन्ततः ॥
जम्बुद्वीपस्य तीर्थानां माहात्म्यं पापनाशनम् ।
साभ्रमत्याश्च माहात्म्यं नृसिंहोत्पत्तिवर्णनम् ॥
देवशर्मादिकाख्यानं गीतामाहात्म्यवर्णने ।
भक्ताख्यानञ्च माहात्म्यं श्रीमद्भागवतस्य ह ॥

इन्द्रप्रस्थस्य माहात्म्य बहुतीर्थकथाचितम् ।
मन्त्ररत्नाभिधानञ्च त्रिपाद्भूत्यनुवणनम् ।।
अवतारकथा पुण्या मत्स्यादीनामत परम् ।
रामनामशत दिव्य तन्माहात्म्यञ्च वाडव ! ।।
परीक्षणञ्च भृगुणा श्रीविष्णोर्वैभवस्य च ।
इत्येतदुत्तर खण्ड पञ्चम सर्वपुण्यदम् ।।

**एतच्छ्रवणफलमितिकर्तव्यतानिर्देशो यथा**

पञ्चखण्डयुत पाद्म य शृणोति नरोत्तम ।
स लभेद्वैष्णव धाम भुक्त्वा भोगानिहेप्सितान् ।।
एतद्वै पञ्चपञ्चाशत् सहस्र पद्मसञ्ज्ञकम् ।
पुराण लेखयित्वा वै ज्येष्ठ्या स्वर्णाज्यसयुतम् ।।
य प्रदद्यात्सुमतये पुराणज्ञाय मानद ! ।
स याति वैष्णव धाम सर्वदेवनमस्कृत ।।
पद्मानुक्रमणीमेता य पठेच्छृणुयात्तथा ।
सोऽपि पद्मपुराणस्य लभेत् श्रवणज फलम् ।।

## ३—विष्णुपुराणम्

विष्णुपुराणे भागद्वयमस्ति, पूर्वभाग उत्तरभागश्च । तत्र पूर्वभागे षड् अशा सन्ति । प्रथमेऽशे २२, द्वितीयेऽशे १६, तृतीयेऽशे १८, चतुर्थेऽशे २४, पञ्चमेऽशे ३८, षष्ठेऽशे च ८ अध्याया सन्ति, सङ्कलनया अत्र १२६ अध्यायेषु अधोङ्किता विषया सन्ति । एतत्त्रयोविंशतिसहस्र ( २३०००० ) सख्याक मस्ति । एतत्परिचयश्चैव वर्तते —

वाराहकल्पवृत्तान्तमधिकृत्य पराशर ।
यत्प्राह धर्मानखिलास्तदुक्तं वैष्णव विदु ।।
त्रयोविंशतिसाहस्र तत्प्रमाण विदुर्बुधा ।
( मत्स्यपुराणे ५३ अध्याय )

शृणु वत्स ! प्रवक्ष्यामि पुराण वैष्णव महत् ।
त्रयोविंशति साहस्र सर्वपातकनाशनम् ।।
यत्रादिभागे निर्दिष्टा षडशा शक्तिजेन ह ।
मैत्रेयायादिमे तत्र पुराणस्यावतारिका ।।
( नारदीयपुराणे ९४ अध्याय )

(१) प्रथमांशस्य प्रधानविषयाः

आदिकारणसर्गश्च देवादीनाञ्च सम्भव ।
समुद्रमथनाख्यान दक्षादीना कथाचय ॥
ध्रुवस्य चरित चैव पृथोश्चरितमेव च ।
प्राचेतस तथाख्यान प्रह्लादस्य कथानकम् ॥
पृथुराज्याधिकाराख्य प्रथमोऽश इतीरित ।

(२) द्वितीयेंऽशे

पातालनरकाख्यान सप्तसगनिरूपणम् ।
सूर्य्यादिचारकथन पृथग्लक्षणसगतम् ॥
चरित भरतस्याथ मुक्तिमागनिदर्शनम् ।
निदाघऋतुसम्वादो द्वितीयोऽश उदाहृत ॥

(३) तृतीयेंऽशे

मन्वन्तरसमाख्यान वेदव्यासावतारकम् ।
नरकोद्धारक कर्म गदितञ्च तत परम् ॥
सगरस्यौर्वसम्वादे सर्वधर्मनिरूपणम् ।
श्राद्धकल्प तथोद्दिष्ट वर्णाश्रमनिबन्धने ॥
सदाचारश्च कथितो मायामोहकथा तत ।
तृतीयोऽशोऽयमुदित सर्वपापप्रणाशन ॥

(४) चतुर्थेंऽशे

सूर्यवशकथा पुण्या सोमवशानुकीर्तनम् ।
चतुर्थेऽशे मुनिश्रेष्ठ ! नानाराजकथाचितम् ॥

(५) पञ्चमेंऽशे

कृष्णावतारसम्प्रश्नो गोकुलीया कथा तत ।
पूतनादिवधो बाल्ये कौमारेऽघादिहिंसनम् ॥
कैशोरे कसहनन माथुर चरितन्तथा ।
ततस्तु यौवने प्रोक्ता लीला द्वारवतीभवा ॥
सर्वदैत्यवधो यत्र विवाहाश्च पृथग्विधा ।
यत्र स्थित्वा जगन्नाथ कृष्णो योगेश्वरेश्वर ॥
भूभारहरण चक्रे परस्वहननादिभि ।
अष्टावक्रीयमाख्यान पञ्चमोऽशइतीरित ॥

(६) षष्ठेऽशे

कलिज चरितम्प्रोक्त चातुर्विध्य लयस्य च ।
ब्रह्मज्ञानसमुद्देश खाण्डिक्यस्य निरूपित ॥
केशिध्वजेन चेत्येष षष्ठोऽश परिकीर्तित ।'
अत परन्तु सूतेन शौनकादिभिरादरात् ।
पृष्टेन चोदिता शश्वत् विष्णुधर्मोत्तराह्वया ॥
नाना धमकथा पुण्या व्रतानि नियमा यमा ।
धमशास्त्रार्थशास्त्र वेदान्त ज्यौतिषन्तथा ॥
वशाख्यानम्प्रकरणात् स्तोत्राणि मनवस्तथा ।
नानाविद्याश्रया प्रोक्ता सर्वलोकोपकारका ॥
एतद्विष्णुपुराण वै सर्वशास्त्रार्थसग्रह ।

**एतस्य पाठश्रवणफलमितिकर्त्तव्यता निर्देशो यथा**

वाराहकल्पवृत्तान्त व्यासेन कथितन्त्विह ।
यो नर पठते भक्त्या य शृणोति च सादरम् ॥
तावुभौ विष्णुलोक हि व्रजेताम्भुक्तभोगकौ ।
तल्लिखित्वा च यो दद्यादाषाढ्या घृतधेनुना ॥
सहित विष्णुभक्ताय पुराणार्थविदे द्विज ।
स याति वैष्णव धाम विमानेनार्कवचसा ॥
यश्च विष्णुपुराणस्य समनुक्रमणी द्विज ! ।
कथयेच्छृणुयाद्वाऽपि स पुराणफल लभेत् ॥

## ४—शिवपुराणम्

शिवपुराणे सप्तसहिता सन्ति (१) विद्येश्वरसहिता (२) रुद्रसहिता (३) शतरुद्रसहिता (४) कोटिरुद्रसहिता (५) उमासंहिता (६) कैलाससहिता (७) वायवीयसहिता च । तत्रापि द्वितीयस्या रुद्रसहिताया सृष्टि सती पार्वती कुमार-युद्धनामान पञ्च खण्डा सन्ति । सप्तमाया वायवीयसहिताया पूर्वोत्तर भेदेन खण्डद्वयञ्चास्ति । तत्र सप्तसु सहितासु क्रमश २५, ९८७, ४२, ४३, ५७, २३, ७६ गणनया ४६४ अध्यायेषु अधोङ्किता विषया सन्ति । एतच्च चतुर्विशतिसहस्र (२४००००) सख्याकमस्ति । एतत्परिचयश्चैव विद्यते—

श्वेतकल्पप्रसङ्गेन धर्म्मान्वायुरिहाब्रवीत् ।
यत्र तद् वायवीय स्याद्रुद्रमाहात्म्यसयुतम् ॥
चतुर्विशत्सहस्राणि पुराण तदिहोच्यते ।
( मत्स्यपुराणे ५३ अध्याय )

देवीभागवतादिपुराणेषु पुराणगणनाया शिवपुराणस्योल्लेखो नास्ति, तस्य स्थाने वायवीयपुराणस्य नाम दृश्यते, किन्तु श्रीमद्भागवतादिपुराणेषु शिवपुराणस्येव नाम निर्दिष्टमस्ति, एवमुभयोमहापुराणत्वविषये महान् मतभेदो दृश्यते। केचन शिवपुराण महापुराण मन्यन्ते, केचित्तु शिवपुराणमेव महा पुराण स्वीकुवन्ति, वायुपुराणञ्चोपपुराण कथयन्ति। तथापि—

यथा शिवस्तथा शैवपुराण वायुनोदितम्।
शिवभक्तिसमायोगा नामद्वयविभूषितम् ॥

इति रेवामाहात्म्यप्रामाण्येन एकस्यैव पुराणस्य शिवमहिम्न सूचकत्वात् शिवपुराणम्, वायुनोक्तत्वाच्च वायवीयपुराणमिति नामद्वयमस्ति, यत्तु वायुपुराण पृथगुपलभ्यते तत् उपपुराणमस्ति, न तु महापुराणम्।

यथा—चत्वारो वा इमे वेदा ऋग्वेदो यजुर्वेद सामवेदो ब्रह्मवेद, इत्यनुसारमथववेदस्य अथवऋषिसगृहीतत्वात् अथववेद, ब्रह्माधिकृतत्वाच्च ब्रह्मवेद इत्यपि नाम श्रूयते। यथा वा उत्तरमीमासाया वेदान्तदशन शिशुपालवधस्य च माघकाव्यमपि नाम विद्वद्वर्गे प्रचलितमस्ति, तथैव एकस्यैवास्य पुराणस्य शिवपुराण वायवीयपुराणमिति नामद्वयमुपलभ्यते। वस्तुत प्रथममेकलक्षात्मक शिवपुराण शिवद्वारोपदिष्टमासीत्, परन्तु पश्चात् वायुना चतुर्विंशतिसहस्रात्मकमस्मिन्भूलोके प्रकाशितमित्यतो नामद्वय प्रचलितमभवत्। तदुक्तम्—

तदिद शैवमाख्यात, पुराण वेदसम्मितम्।
निर्मित तच्छिवेनैव प्रथम ब्रह्मसम्मितम् ॥

●

## ५—श्रीमद्भागवतम्

विभिन्नपुराणेषु पुराणगणनाया केवल भागवतस्योल्लेखोऽस्ति, परन्तु वैष्णवा विष्णुमहत्वप्रकाशक श्रीमद्भागवत शाक्ताश्च शक्तिसामर्थ्यसूचक देवीभागवत भागवत मन्यन्ते। उभयत्रापि द्वादशस्कधा, अष्टादशसहस्र (१८०००) सख्याकाश्च श्लोका सन्ति। श्रीमद्भागवते ३३२ अध्याया सन्ति। तत्परिचयश्चैव वतते—

यत्राधिकृत्य गायत्री वर्ण्यते धमविस्तर।
वृत्रासुरवधोपेत तद् भागवतमुच्यते ॥
सारस्वतस्य कल्पस्य मध्ये ये स्युर्नरोत्तमा।
तद्वृत्तान्तोद्भव लोके तद्भागवतमुच्यते ॥
(मत्स्यपुराणे ५३ अध्याय)

मरीचे! शृणु वक्ष्यामि वेदव्यासेन यत्कृतम्।
श्रीमद्भागवत नाम पुराण ब्रह्मसमितम् ॥

तदष्टादशसाहस्रं कीर्त्तितं पापनाशनम् ।
सुरपादपरूपोऽयं स्कन्धैर्द्वादशभियुतः ॥
भगवानेव विप्रेन्द्र ! विश्वरूपी समीरितः ।
( नारदीय पु० ९६ अध्याय )

१ तस्य प्रथमस्कन्धे—

तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः ।
व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च ॥
पारीक्षितमुपाख्यानमितीदं समुदाहृतम् ।

(२) द्वितीयस्कन्धे—

परीक्षिच्छुकसम्वादे सृतिद्वयनिरूपणम् ।
ब्रह्मनारदसंवादेऽवतारचरितामृतम् ।
पुराणलक्षणञ्चैव सृष्टिकारणसम्भवः ।
द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता ॥

(३) तृतीयस्कन्धे—

चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः ।
सृष्टिप्रकरणं पश्चाद् ब्रह्मणः परमात्मनः ॥
कापिलं सांख्यमप्यत्र तृतीयोऽयमुदाहृतः ।

(४) चतुर्थस्कन्धे—

सत्याश्चरितमादौ तु ध्रुवस्य चरितं ततः ।
पृथोः पुण्यसमाख्यानं ततः प्राचीनबर्हिषः ॥
इत्येष तूर्य्यो गदितो विसर्गे स्कन्ध उत्तमः ।

(५) पञ्चमस्कन्धे—

प्रियव्रतस्य चरितं तद्वंश्यानाञ्च पुण्यदम् ।
ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः ॥
नरकस्थितिरित्येव संस्थाने पञ्चमो मतः ।

(६) षष्ठस्कन्धे—

अजामिलस्य चरितं दक्षसृष्टिनिरूपणम् ।
वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम् ॥
षष्ठोऽयमुदितः स्कन्धो व्यासेन परितोषणे ।

(७) सप्तमस्कन्धे—

प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम् ।
सप्तमो गदितो वत्स ! वासनाकर्मकीर्त्तने ॥

(८) अष्टमस्कन्धे

गजेन्द्रमोक्षणाख्यान मन्वन्तरनिरूपणम् ।
समुद्रमथनञ्चैव बलिवैभवबन्धनम् ॥
मत्स्यावतारचरितमष्टमोऽय प्रकीर्तित ।

(९) नवमस्कन्धे

सूर्यवंशसमाख्यान सोमवंशनिरूपणम् ।
वंश्यानुचरिते प्रोक्तो नवमोऽय महामते ! ॥

दशमस्कन्धे

कृष्णस्य बालचरित कौमारञ्च व्रजस्थिति ।
कैशोर मथुरास्थान यौवने द्वारिकास्थिति ॥
भूभारहरणञ्चात्र निरोधे दशम स्मृत ।

(११) एकादशस्कन्धे—

नारदेन तु सवादो वसुदेवस्य कीर्तित ।
यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च ॥
यादवाना मिथोऽन्तश्च मुक्तावेकादश स्मृत ।

(१२) द्वादशस्कन्धे

भविष्यकलिनिर्देशो मोक्षो राज्ञ परीक्षित ।
वेदशाखाप्रणयन मार्कण्डेयतप क्रिया ॥
सौरी विभूतिरुदिता सात्वती च तत परम् ।
पुराणसख्याकथनमाश्रये द्वादशो ह्यहम् ॥
इत्येव कथित वत्स ! श्रीमद्भागवत तव ।

श्रवणादिफलमितिकर्तव्यतानिर्देशश्च

वक्तु श्रोतुश्चोपदेष्टुरनुमोदितुरेव च ।
साहाय्यकर्तुर्गदित भक्तिभुक्तिविमुक्तिदम् ॥
प्रौष्ठपद्या पूर्णिमाया हेमसिंहसमाचितम् ।
देय भागवतायेद द्विजाय प्रीतिपूर्वकम् ॥
सम्पूज्य वस्त्रहेमाद्यैर्भगवद्भक्तिमिच्छता ।
सोऽप्यनुक्रमणीमेता श्रावयेच्छृणुयात्तथा ॥
स पुराणश्रवणज प्राप्नोति फलमुत्तमम् ।

## ६—नारदीय पुराणम्

नारदपुराणे भागद्वय विद्यते, पूर्वभाग उत्तरभागश्च । तत्र पूर्वभागे चत्वार पादा १२५ अध्याया, उत्तरभागे च ८२ अध्याया सन्ति, सकलनया अ॰

२०७ अध्यायेषु अधोऽङ्किता विषया सन्ति। एतस्य श्लोकसंख्या पञ्चविंशति सहस्र ( २५०००० ) मस्ति। एतत्परिचयश्चैव विद्यते—

यत्राह नारदो धर्मान् बृहत्कल्पाश्रयाणि च।
पञ्चविंशति सहस्राणि नारदीय तदुच्यते॥

( मत्स्यपुराणे ५३ अध्याय )

शृणु विप्र! प्रवक्ष्यामि पुराण नारदीयकम्।
पञ्चविंशतिसाहस्र बृहच्चित्रकथाश्रयम्॥

**(१) तत्र पूर्वभागस्य प्रथमपादे**

सूतशौनकसम्वाद सृष्टिसक्षेपवर्णनम्।
नानाधर्मकथा पुण्या प्रवृत्ते समुदाहृता.॥
प्राग्भागे प्रथमे पादे सनकेन महात्मना।

**(२) पूर्वभागस्य द्वितीयपादे**

द्वितीये मोक्षधर्माख्ये मोक्षोपायनिरूपणम्।
वेदाङ्गानाञ्च कथनं शुकोत्पत्तिश्च विस्तरात्॥
सनन्दनेन गदिता नारदाय महात्मने।

**(३) पूर्वभागस्य तृतीयपादे**

महातन्त्रे समुद्दिष्ट पशुपाशविमोक्षणम्।
मन्त्राणा शोधन दीक्षा मन्त्रोद्धारश्च पूजनम्॥
प्रयोगा कवच चैव सहस्र स्तोत्रमेव च।
गणेशसूर्यविष्णूना शिवशक्त्योरनुक्रमात्॥
सनत्कुमारमुनिना नारदाय तृतीयके।

**(४) पूर्वभागस्य चतुर्थपादे**

पुराणलक्षणञ्चैव प्रमाण दानमेव च।
पृथक् पृथक समुद्दिष्ट दानकालपुर सरम्॥
चैत्रादिसर्वमासेषु तिथीना च पृथक पृथक्।
प्रोक्तम्प्रतिपदादीना व्रत सर्वाघनाशनम्॥
सनातनेन मुनिना नारदाय चतुर्थके।
पूर्वभागोऽयमुदितो बृहदाख्यानसञ्ज्ञित॥

**उत्तरभागे च**

अस्योत्तरे विभागे तु प्रश्न एकादशीव्रते।
वशिष्ठेनाथ सम्वादो मान्धातु परिकीर्तित।
रुक्माङ्गदकथा पुण्या मोहिन्युत्पत्तिकर्म च।

वसुशापश्च मोहिन्यै पश्चादुद्धरणक्रिया ॥
गङ्गा कथा पुण्यतमा गयामात्रानुकीर्त्तनम् ।
काश्या माहात्म्यमतुलम्पुरुषोत्तमवर्णनम् ॥
यात्राविधान क्षेत्रस्य बह्वाख्यानसमन्वितम् ।
प्रयागस्याथ माहात्म्य कुरुक्षेत्रस्य तत्परम् ॥
हरिद्वारस्य चाख्यान कामोदाख्यानकन्तथा ।
बदरीतीर्थमाहात्म्य कामाख्यायास्तथैव च ॥
प्रभासस्य च माहात्म्य पुराणाख्यानकन्तथा ।
गौतमाख्यानक पश्चाद् वेदपाठस्तवस्तत ॥
गोकर्णक्षेत्रमाहात्म्य लक्ष्मणाख्यानक तथा ।
सेतुमाहात्म्यकथन नर्मदातीर्थवर्णनम् ॥
अवन्त्याश्चैव माहात्म्य मथुरायास्तत परम् ।
वृन्दावनस्य महिमा वसो ब्रह्मान्तिके गति ॥
मोहिनीचरित पश्चादेव वै नारदीयकम् ।

**श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा—**

य शृणोति नरो भक्त्या श्रावयेद्वा समाहित ।
स याति ब्रह्मणो धाम नात्र कार्या विचारणा ॥
यस्त्वेतदिषपूर्णाया धेनूना सप्तकाचितम् ।
प्रदद्याद् द्विजवर्याय स लभेन्मोक्षमेव च ।
यश्चानुक्रमणीमेता नारदीयस्य वर्णयेत् ॥
शृणुयाद्वैकचित्तेन सोऽपि स्वगर्गति लभेत् ।

●

## ७—मार्कण्डेयपुराणम्

मार्कण्डेयपुराणे १३४ अध्यायेषु निम्नाङ्किता विषया उपलभ्यन्ते। एतस्य श्लोकसख्या नव सहस्र (९००० ) विद्यते ( परमिदानीमत्र ६९०० एव श्लोका उपलभ्यन्ते, २१०० श्लोका नोपलभ्यन्ते ) एतत्परिचयश्चैव मस्ति—

यत्राधिकृत्य शकुनीन्धर्मान्धर्म्मविचारणान् ।
व्याख्याता वै मुने ! प्रश्ना मुनिभिर्धर्मचारिभि ॥
मार्कण्डेयेन कथित तत्सर्वं विस्तरेण तु ।
पुराण नवसाहस्र मार्कण्डेयमिहोच्यते ॥

( मत्स्यपुराणे ५३ अध्याय )

यत्राधिकृत्य शकुनीन् सर्वधर्मनिरूपणम् ।
मार्कण्डेयेन मुनिना जैमिने प्राक समीरितम् ॥
पक्षिणा धर्मसज्ञाना ततो जन्मनिरूपणम् ।
पूर्वजन्मकथा चैषा विक्रिया च दिवस्पते ॥
तीर्थयात्रा बलस्यातो द्रौपदेयकथानकम् ।
हरिश्चन्द्रकथा पुण्या युद्धमाडीवकाभिधम् ॥
पितृपुत्रसमाख्यान दत्तात्रेयकथा तत ।
हैहयस्याथ चरित महाख्यानसमाचितम् ॥
मदालसाकथा प्रोक्ता ह्यलर्काचरिताचिता ।
सृष्टिसकीतन पुण्य नवधा परिकीर्तितम् ॥
कल्पान्तकालनिर्देशो यक्ष्मसृष्टिनिरूपणम् ।
रुद्रादिसृष्टिरप्युक्ता द्वीपवर्षानुकीत्तनम् ॥
मनूना च कथा नाना कीर्त्तिता पापहारिका ।
तासु दुर्गाकथात्यन्त पुण्यदा चाष्टमेऽन्तरे ॥
तत्पश्चात्प्रणवोत्पत्तिस्त्रयीतेज समुद्भव ।
मार्त्तण्डस्य च जन्माख्या तन्माहात्म्यसमाचिता ॥
वैवस्वतान्वयश्चापि वत्सव्याश्चरित तत ।
खनित्रस्य तत प्रोक्ता कथा पुण्या महात्मन ॥
अविक्षिच्चरित चैव किमिच्छ व्रतकीर्तनम् ।
नरिष्यन्तस्य चरित इक्ष्वाकुचरित तत ॥
तुलस्याश्चरित पश्चाद्रामचन्द्रस्य सत्कथा ।
कुशवशसमाख्यान सोमवशानुकीतनम् ॥
पुरूरव कथा पुण्या नहुषस्य कथाद्भुता ।
ययाति चरित पुण्य यदुवशानुकीतनम् ॥
श्रीकृष्णबालचरित माथुर चरित तत ।
द्वारकाचरितश्चाथ कथा सर्वावतारजा ॥
तत साख्यसमुद्देश प्रपञ्चासत्वकीर्त्तनम् ।
मार्कण्डेयस्य चरित पुराणश्रवणे फलम् ॥
श्रवणादिफलमितिकर्तव्यतानिर्देशश्च ।
य शृणोति नरो भक्त्या पुराणमिदमादरात् ॥
मार्कण्डेयाभिध वत्स ! स लभेत्परमा गतिम् ।
यस्तु व्याकुरुते चैतच्छैव स लभते पदम् ॥
तत्प्रयच्छेल्लिखित्वा य सौवर्णकरिसयुतम् ।

कार्तिक्या द्विजवर्षाय स लभेद् ब्रह्मण पदम् ॥
शृणोति श्रावयेद्वापि यश्चानुक्रमणीमिमाम् ।
मार्कण्डेयपुराणस्य च लभेद्वाञ्छितम्फलम् ॥

## ८—अग्निपुराणम्

अग्निपुराणे ३८३ अध्याया उपलभ्यन्ते । एतच्च नारदीयपुराणानुसार पञ्चदश सहस्रा ( १५०००० ) त्मकमस्ति । किन्तु मत्स्यपुराणानुसारमेतत् षोडशसहस्र ( १६००० ) सख्याकमेवास्ति । एतत्परिचयश्चैव वतते—

यत्तदीशानक कल्प वृत्तान्तमधिकृत्य च ।
वसिष्ठायाग्निना प्रोक्तमाग्नेय तत्प्रचक्षते ॥
तच्च षोडशसाहस्र सर्वक्रतुफलप्रदम् ।
( मत्स्यपुराणे ५३ अध्याय )

अथात सप्रवक्ष्यामि तवाग्नेयपुराणकम् ।
ईशानकल्पवृत्तान्त वसिष्ठायानलोऽब्रवीत् ॥
तत्पंचदशसाहस्र नाम्ना चरितमद्भुतम् ।
पठतां शृण्वतां चैव सर्वपापहर नृणाम् ।
( नारदीयपुराणे ९९ अध्याय )

प्रश्नपूव पुराणस्य कथा सर्वावतारजा ।
सृष्टि प्रकरण चाथ विष्णुपूजादिक तत ॥
अग्निकार्यं तत पश्चान्मत्रमुद्रादिलक्षणम् ।
सवदीक्षाविधान च अभिषेकनिरूपणम् ॥
लक्षण मण्डलादीना कुशापामाजन तत ।
पवित्रारोपणविधिर्देवालयविधिस्तथा ॥
शालग्रामादिपूजा च मूर्तिलक्ष्म पृथक पृथक् ।
न्यासादीना विधान च प्रतिष्ठापूतका तत ॥
विनायकादिदीक्षाणा विधि ज्ञेयस्तत परम् ।
प्रतिष्ठा सवदेवाना ब्रह्माण्डस्य निरूपणम् ।
गङ्गादितीर्थमाहात्म्य जम्बादिद्वीपवर्णनम् ।
ऊर्ध्वाधोलोकरचना ज्योतिश्चक्रनिरूपणम् ॥
ज्यौतिष च तत प्रोक्त शास्त्र युद्धजयार्णवम् ।
षटकम्म च तत प्रोक्त मत्रयत्रौषधीगण ॥
कुब्जिकादिसमर्चा च षोढा न्यासविधिस्तथा ।
कोटिहोमविधान च तदन्तरनिरूपणम् ॥
ब्रह्मचर्यादिधर्म्माश्च श्राद्धकल्पविधिस्तत ।

गृहयज्ञस्तत प्रोक्तो वैदिकस्मार्त्तकम च ॥
प्रायश्चित्तानुकथन तिथीना च व्रतादिकम् ।
वारव्रतानुकथन नक्षत्रव्रतकीर्त्तनम् ॥
मासिकव्रतनिर्देशो दीपदानविधिस्तथा ।
नवव्यूहार्चन प्रोक्त नरकाणा निरूपणम् ॥
व्रताना चापि दानाना निरूपणमिहोदितम् ।
नाडीचक्रसमुद्देश सन्ध्याविधिरनुत्तम ॥
गायत्र्यथस्य निर्देशो लिङ्गस्तोत्र तत परम् ।
राज्याभिषेकमन्त्रोक्तिधर्मकृत्य च भूभुजाम् ॥
स्वप्नाध्यायस्तत प्रोक्त शकुनादिनिरूपणम् ।
मण्डलादिकनिर्देशो रणदीक्षा विधिस्तत ॥
रामोक्तमीति निर्देशो रत्नाना लक्षण तत ।
धनुर्विद्या तत प्रोक्ता व्यवहारप्रदर्शनम् ॥
देवासुरविमर्द्दाख्या ह्यायुर्वेदनिरूपणम् ।
गजादीना चिकित्सा च तेषा शान्तिस्तत परम् ॥
गोनसादिचिकित्सा च नानापूजास्तत परम् ।
शान्तयश्चापि विविधाश्छन्द शास्त्रमत परम् ॥
साहित्य च तत पश्चादेकार्णादिसमाह्वया ।
सिद्धशिष्टानुशिष्टश्च कोष स्वर्गादिवगके ॥
प्रलयाना लक्षण च शारीरकनिरूपणम् ।
वर्णन नरकाणा च योगशास्त्रमत परम् ॥
ब्रह्मज्ञान तत पश्चात् पुराणश्रवणे फलम् ।
एतदाग्नेयक विप्र ! पुराण परिकीर्तितम् ॥

●

## ९—भविष्यपुराणम्

भविष्यपुराणे पञ्चपर्वाणि सन्ति (१) ब्राह्मपर्वम् (२) वैष्णवपर्वम् (३) शैवपर्वम् (४) सौरपर्वम् (५) प्रतिसर्गपर्वञ्च। अत्र ६०१ अध्याया सन्ति नारदीयपुराणानुसारमेतत् चतुर्दशसहस्र( १४००० )सख्याकमस्ति, किन्तु मत्स्यपुराणानुसार सार्धचतुर्दशसहस्र ( १४५०० ) सख्याकमस्ति। एतत्परिचयश्चैव वर्तते—

यत्राधिकृत्य माहात्म्यमादित्यस्य चतुर्मुख ।
अघोरकल्पवृत्तान्तप्रसङ्गेन जगत्स्थितम् ॥
मनवे कथयामास भूतग्रामस्य लक्षणम् ।

चतुर्दशसहस्राणि तथा पञ्चशतानि च ॥
भविष्यचरितप्राय भविष्य तदिहोच्यते ।

( मत्स्यपुराणे ५३ अध्याय )

अथ ते सम्प्रवक्ष्यामि पुराण सर्वसिद्धिदम् ।
भविष्य भवत सर्वलोकाभीष्टप्रदायकम् ॥
तत्राह सर्वदेवामामादिकर्ता समुद्यत ।
सृष्ट्यर्थं तत्र सञ्जातो मनु स्वायम्भुव पुरा ॥
स मा प्रणम्य पप्रच्छ धर्म सर्वार्थसाधकम् ।
अह तस्मै तदा प्रीत प्रावोच धर्मसहितम् ॥
पुराणाना यदा व्यासो व्यासञ्चक्रे महामति ।
तदा ता सहिता सर्वा पञ्चधा व्यभजन्मुनि ॥
अघोरकल्पवृत्तान्तनानाश्चर्यकथाचिताम् ।

( नारदीयपुराणे १०० अध्याय )

## (१) तत्र प्रथमपर्वणि

तत्रादिम स्मृत पर्व ब्राह्म यत्रास्त्युपक्रम ।
सूतशौनकसम्वादे पुराणप्रश्नसक्रम ॥
आदित्यचरित प्राय सर्वाख्यानसमाचित ।
सृष्ट्यादिलक्षणोपेत शास्त्रसर्वसरूपक ॥
पुस्तलेखकलेखाना लक्षणञ्च तत परम् ।
सस्काराणाञ्च सर्वेषा लक्षणञ्चात्र कीर्तितम् ।
पक्षत्यादितिथीनाञ्च कल्पा सप्त च कीर्तिता ।
अष्टमाद्या शेषकल्पा वैष्णवे पर्वणि स्मृता ॥
शैवे च कामतो भिन्ना सौरे चान्त्यकथाचय ।
प्रतिसर्गाह्वय पश्चान्नानाख्यानसमाचितम् ॥
पुराणस्योपसहारसहित पर्वपञ्चमम् ।
एषु पञ्चसु पूर्वस्मिन् ब्रह्मणो महिमाधिक ॥

## द्वितीयतृतीयचतुर्थपञ्चमपर्वसु

धर्मे कामे च मोक्षे तु विष्णोश्चापि शिवस्य च ।
द्वितीये च तृतीये च सौरो वर्गचतुष्टये ॥
प्रतिसर्गाह्वयन्त्वान्त्य प्रोक्त सर्व कथाचितम् ।
एतद्भविष्यं निर्दिष्ट पर्व व्यासेन धीमता ॥
चतुर्दशसहस्र तु पुराण परिकीर्तितम् ।

भविष्य सर्ववेदाना साम्य यत्र प्रकीर्तितम् ॥
गुणाना तारतम्येन सम ब्रह्मेति हि श्रुति ।

**एतस्य श्रवणफलमितिकर्तव्यतानिर्देशो यथा**

तल्लिखित्वा तु यो दद्यात्पौष्या विद्वान्विमत्सर ।
गुडधेनुयुत हेम वस्त्रमाल्यविभूषणै ॥
वाचकम्पुस्तकञ्चापि पूजयित्वा विधानत ।
गन्धाद्यैर्भोज्यभक्ष्यैश्च कृत्वा नीराजनादिकम् ॥
यो वै जितेन्द्रियो भूत्वा सोपवास समाहित ।
अथवा यो नरो भक्त्या कीतयेच्छृणुयादपि ॥
स मुक्त पातकैर्घोरै प्रयाति ब्रह्मण पदम् ।
योऽप्यनुक्रमणीमेता भविष्यस्य निरूपिताम् ॥
पठेद्वा शृणुयाच्चैतौ भुक्तिं मुक्तिञ्च विन्दत ।

## १०—ब्रह्मवैवर्तपुराणम्

ब्रह्मवैवर्ते चत्वार खण्डा सन्ति (१) ब्रह्मखण्ड (२) प्रकृतिखण्ड (३) गणेशखण्ड (४) श्रीकृष्णजन्मखण्डश्च। तत्रान्ते भागद्वयमस्ति, पूर्वभाग उत्तरभागश्च। अत्र (क्रमश ३०, ५७, ४६, १३३) सङ्कलनया २६६ अध्याया सन्ति। एतस्य श्लोकसख्या अष्टादशसहस्रात्मिका (१८०००) अस्ति। एतत्परिचयश्चैवमस्ति—

रथन्तरस्य कल्पस्य वृत्तान्तमधिकृत्य च ।
सावर्णिना नारदाय कृष्णमाहात्म्यमुत्तमम् ॥
यत्र ब्रह्मावराहस्य चरित वर्ण्यते मुहु ।
तदष्टादशाहस्र ब्रह्मवैवर्तमुच्यते ॥

(मत्स्यपुराणे ५३ अध्याय)

ब्रह्मोवाच-शृणु वत्स प्रवक्ष्यामि पुराण दशम तव ।
ब्रह्मवैवर्त्तक नाम वेदमार्गानुदर्शकम् ॥
सावर्णिर्यत्र भगवान् साक्षाद् देवर्षयेऽतिथि ।
नारदाय पुराणार्थं प्राह सर्वमलौकिकम् ॥
धर्मार्थकाममोक्षाणा सार प्रीतिहरौ हरे ।
तयोरभेदसिद्ध्यर्थं ब्रह्मवैवर्त्तमुत्तमम् ॥

(नारदीय

रथन्तरस्य कल्पस्य वृत्तान्त यन्मयोदितम् ।
शतकोटिपुराण तत् सक्षिप्य प्राह वेदवित् ॥

व्यासश्चतुर्द्धा सव्यस्य ब्रह्मवैवर्तसञ्ज्ञितम् ।
अष्टादशसहस्रन्तत्पुराण परिकीर्त्तितम् ॥
ब्रह्मप्रकृतिविघ्नेश कृष्णखण्ड समाचितम् ।
तत्र सूतर्षिसम्वाद पुराणोपक्रमो मत ॥

(१) तत्र प्रथमे ब्रह्मखण्डे

सृष्टिप्रकरण त्वाद्य ततो नारदवेधसौ ।
विवाद सुमहान् यत्र द्वयोरासीत्पराभव ॥
शिवलोकगति पश्चाज्ज्ञानलाभ शिवान्मुने ।
शिव वाक्येन तत्पश्चात् मरीचेर्नारदस्य तु ॥
मननश्चैव सावर्णिर्ज्ञानाथ सिद्धसेविते ।
आश्रमे सुमहापुण्ये त्रैलोक्याश्चयकारिणि ॥
एतद्धि ब्रह्मखण्ड हि श्रुत पापविनाशनम् ।

(२) द्वितीये प्रकृतिखण्डे

तत सावर्णिसम्वादो नारदस्य समीरित ।
कृष्णमाहात्म्यसयुक्तो नानाख्यानकथोत्तर ॥
प्रकृतेरशभूताना कलानाञ्चापि वर्णितम् ।
माहात्म्य पूजनाद्यञ्च विस्तरेण यथास्थितम् ॥
एतत्प्रकृतिखण्ड हि श्रुत भूतिविधायकम् ।

(३) तृतीये गणेशखण्डे

गणेशजन्मसम्प्रश्न सपुण्यकमहाव्रतम् ।
पार्वत्या कार्त्तिकेयेन सह विघ्नेशसम्भव ॥
चरित कार्त्तवीर्यस्य जामदग्न्यस्य चाद्भुतम् ।
विवाद सुमहान्वश्चाज्जामदग्न्यगणेशयो ॥
एतद्विघ्नेशखण्ड हि सर्वं विघ्नविनाशनम् ।

(४) चतुर्थे श्रीकृष्णखण्डे

श्रीकृष्णजन्म सम्प्रश्नोजन्माख्यान ततोऽद्भुतम् ।
गोकुले गमन पश्चात्पूतनादिवधोऽद्भुत ॥
बाल्यकौमारजा लीला विविधास्तत्र वर्णिता ।
रासक्रीडा च गोपीभिः शारदी समुदाहृता ॥
रहस्ये राधया क्रीडा वर्णिता बहुविस्तरा ।
सहाक्रूरेण तत्पश्चान्मथुरागमन हरे ॥
कसादीना वधेवृत्तेसदस्यद्विजसस्कृति ।

काश्यसान्दीपने पश्चाद् विद्योपादानमद्भुतम् ॥
यवनस्य वध पश्चाद् द्वारकागमन हरे ।
नरकादिवधस्तत्र कृष्णेन विहितोऽद्भुत ॥
कृष्णखण्डमिद विप्र ! नृणा ससारखण्डनम् ।

**श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा**

पठितञ्च श्रुत ध्यात पूजित चाभिवर्णितम् ।
इत्येतद् ब्रह्मवैवर्त्तं पुराण चात्यलौकिकम् ॥
व्यासोक्त चादिसम्भूत पठन् शृण्वन् विमुच्यते ।
विज्ञानज्ञानशमनाद् घोरात्ससारसागरात् ॥
लिखित्वेद च यो दद्यान्माघ्या धेनुसमाचितम् ।
ब्रह्मलोकमवाप्नोति स मुक्तोऽज्ञानबन्धनात् ॥
यश्चानुक्रमणी वाऽपि पठेद् वा शृणुयादपि ।
सोऽपि कृष्णप्रसादेन लभते वाञ्छितम्फलम् ॥

●

## ११---लिङ्गपुराणम्

लिङ्गपुराणे द्वौ भागौ स्त, अत्र पूवभाग उत्तरभागश्च। क्रमश १०८, ५५, सकलनया १६३ अध्याया सन्ति। इदमेकादशसहस्र (११०००) सख्याकमस्ति। एतत्परिचयश्चैव विद्यते —

यत्राग्निलिङ्गमध्यस्थ प्राह देवो महेश्वर ।
धर्मार्थकाममोक्षार्थमाग्नेयमधिकृत्य च ॥
कल्पान्ते लिङ्गमित्युक्त पुराण ब्रह्मणा स्वयम् ।
तदेकादशसाहस्र

( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच।

शृणु पुत्र ! प्रवक्ष्यामि पुराण लिङ्गसज्ञितम् ।
पठता शृण्वताञ्चैव भुक्तिमुक्तिप्रदायकम् ॥
यच्च लिङ्गाभिधे तिष्ठन् वह्निलिंगे हरोऽभ्यधात् ।
मह्य धर्मादिसिद्ध्यर्थमग्निकल्पकथाश्रयम् ॥
तदेव व्यासदेवेन भागद्वयसमाचितम् ।
पुराण लिङ्गमुदित बह्वाख्यानविचित्रितम् ।
तदेकादशसाहस्र हरमाहात्म्यसूचकम् ।
पर सर्वपुराणाना सारभूतं जगत्त्रये ।
पुराणोपक्रमे प्रश्न सृष्टिसक्षेपत पुरा ॥

( नारदीयपुराणे १०२ अध्याय )

(१) तत्रपूर्वभागे

योगाख्यान तत प्रोक्त कल्पाख्यान तत परम् ।
लिङ्गोद्भवस्तदर्च्चा च कीर्तिता हि तत परम् ॥
सनत्कुमारशैलादिसवादश्चाथ पावन ।
ततो दधीचिचरित युगधर्मनिरूपणम् ॥
ततो भुवनकोषाख्या सूर्यसोमान्वयस्तत ।
ततश्च विस्तरात्सगस्त्रिपुराख्यानकस्तथा ॥
लिङ्गप्रतिष्ठा च तत पशुपाशविमोक्षणम् ।
शिवव्रतानि च तथा सदाचारनिरूपणम् ॥
प्रायश्चित्तान्यरिष्टानि काशीश्रीशैलवर्णनम् ।
अन्धकाख्यानक पश्चात् वाराहचरित पुन ॥
नृसिंहचरित पश्चाज्जलन्धरवधस्तत ।
शैव सहस्र नामाथ दक्षयज्ञविनाशनम् ॥
कामस्य दहन पश्चात् गिरिजाया करग्रह ।
ततो विनायकाख्यान नृत्याख्यान शिवस्य च ॥
उपमन्युकथा चापि पूर्वभाग इतीरित ।

(२) उत्तरभागे च

विष्णुमाहात्म्यकथनमम्बरीषकथा तत ।
सनत्कुमारनन्दीशसम्वादश्च पुनमुने ॥
शिवमाहात्म्यसयुक्तस्नानयागादिक तत ।
सूर्यपूजाविधिश्चैव शिवपूजा च मुक्तिदा ॥
दानानि बहुधोक्तानि श्राद्धप्रकरणन्तत ।
प्रतिष्ठा तत्र गदिता ततोऽघोरस्य कीर्त्तनम् ॥
व्रजेश्वरी महाविद्या गायत्री महिमा तत ।
त्र्यम्बकस्य च माहात्म्य पुराणश्रवणस्य च ॥
एतस्योपरिभागस्ते लैंगस्य कथितो मया ।
व्यासेन हि निबद्धस्य रुद्रमाहात्म्यसूचिन ॥

श्रवणादिफलमितिकर्तव्यताज्ञाननिर्देशो यथा

लिखित्वैतत्पुराणन्तु तिलधेनुसमाचितम् ।
फाल्गुन्या पूर्णिमाया यो दद्याद्भक्त्या द्विजातये ॥
य पठेच्छृणुयाद्वापि लैङ्ग पापापह नर ।
स भुक्तभोगो लोकेऽस्मिन्नन्ते शिवपुर व्रजेत् ॥

लिङ्गानुक्रमणीमेता पठेद्य शृणुयात्तथा ।
तावुभौ शिवभक्तौ तु लोकद्वितयभोगिनौ ॥
जायेता गिरिजाभर्त्तु प्रासादान्नात्र सशय ।

●

# १२---वाराहपुराणम्

वाराहपुराणे भागद्वयमस्ति, पूवभाग उत्तरभागश्च । अत्र २१८ अध्याया सन्ति । एतच्चतुर्विंशतिसहस्र( २४००० )सख्याकमस्ति । एतत्परिचयश्चैव विद्यते ---

महावराहस्य पुनर्माहात्म्यमधिकृत्य च ।
विष्णुनाभिहित क्षुण्यै तद्वाराहमिहोच्यते ।
मानवस्य प्रसगेन कल्पस्य मुनिसत्तमा ।
चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥

( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच

शृणु वत्स ! प्रवक्ष्यामि वाराह वै पुराणकम् ।
भागद्वययुत शश्वद्विष्णुमाहात्म्यसूचकम् ।
मानवस्य तु कल्पस्य प्रसङ्ग मत्कृत पुरा ।
निबबन्ध पुराणेऽस्मिश्चतुर्व्विंशहस्रके ।
व्यासो हि विदुषा श्रेष्ठ साक्षान्नारायणो भुवि ।
तत्रादौ शुभसवाद स्मृतो भूमिवराहयो ॥

( नारदीयपुराणे १०३ अध्याय )

### (१)तत्राद्ये पूर्वभागे

अथादिकृतवृत्तान्ते रभ्यस्य चरित तत ।
दुर्ज्जयाय च तत्पश्चाच्छ्राद्धकल्प उदीरित ।
महातपस आख्यान गौर्य्युत्पत्तिस्तत परम् ॥
विनायकस्य नागाना सेनान्यादित्ययोरपि ॥
गणानाञ्च तथा देव्या धनदस्य वृषस्य च ।
आख्यान सत्यतपसो व्रताख्यानसमन्वितम् ॥
अगस्त्यगीता तत्पश्चाद्रुद्रगीता प्रकीर्तिता ।
महिषासुरविध्वसे माहात्म्यञ्च त्रिशक्तिजम् ॥
पर्वाध्यायस्तत श्वेतोपाख्यान गोप्रदानिकम् ।
इत्यादिकृतवृत्तान्त प्रथमोद्देशनामकम् ॥
भगवद्धर्मके पश्चात् व्रततीर्थकथानकम् ।

द्वात्रिंशदपराधाना प्रायश्चित्त शरीरकम् ॥
तीर्थानाञ्चापि सर्वेषा माहात्म्य पृथगीरितम् ।
मथुराया विशेषेण श्राद्धादीना विधिस्तत ॥
वर्णन यमलोकस्य ऋषिपुत्रप्रसङ्गत ।
विपाक कम्मणाञ्चैव विष्णुव्रतनिरूपणम् ॥
गोकर्णस्य च माहात्म्य कीर्त्तित पापनाशनम् ।
इत्येष पूवभागोऽस्य पुराणस्य निरूपित ॥

(२) द्वितीये उत्तरभागे च

उत्तरे प्रविभागे तु पुलस्त्यकुरुराजयो ।
सवादे सवतीर्थाना माहात्म्य विस्तरात्पृथक् ॥
अशेषधर्माश्चाख्याता पौष्कर पुण्यपव च ।
इत्येव तव वाराह् प्रोक्त पापविनाशनम् ॥

श्रवणादिफलमितिकर्त्तव्यतानिर्दशो यथा

पठता शृण्वताञ्चैव भगवद्भक्तिवर्द्धनम् ।
काञ्चन गरुड कृत्वा तिलधेनुसमाचितम् ॥
लिखित्वैतच्च यो दद्याच्चैत्र्या विप्राय भक्तित ।
स लभेद्वैष्णव धाम देवर्षिगणवन्दित ॥
यो वानुक्रमणीमेता शृणोत्यपि पठत्यपि ।
सोऽपि भक्ति लभेद्विष्णौ ससारोच्छेदकारिणीम् ।

●

## १३—स्कन्दपुराणम्

स्कन्दपुराणे नारदीयपुराणानुसार सप्तखण्डा सन्ति (१) माहेश्वर खण्ड (२) वैष्णवखण्ड (३) ब्रह्मखण्ड (४) काशीखण्ड (५) अवन्तीखण्ड (६) नागरखण्ड (७ प्रभासखण्डश्च । तत्राप्यनेकेऽवान्तरखण्डा सन्ति । अत्र क्रमश १७४, १५३, ८७, १००, ३८७, २७९, ४२१ सकलनया १६७१ अध्याया सन्ति । किन्तु मत्स्यपुराणानुसारमत्र सनत्कुमार सूत शङ्कर वैष्णव ब्राह्म सौरभेदात् षट सहिता सन्ति । एतत् एकाशीतिसहस्र (८१०००) सख्याकमस्ति । एतत्परिचयश्चैव विद्यते—

यत्र माहेश्वरान्धर्म्मानधिकृत्य च षण्मुख ।
कल्पे तत्पुरुषे वृत्त चरितैरुपबृहितम् ॥
स्कान्द नाम पुराण वै तदेकाशीति गद्यते ।
सहस्राणि शत चैकमिति मर्त्येषु गद्यते ॥

( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच ।

शृणु वक्ष्ये मरीचे ! च पुराण स्कन्दसञ्ज्ञितम् ।
यस्मिन् प्रतिपद साक्षान्महादेवो व्यवस्थित ॥
पुराणे शतकोटौ तु यच्छेव वर्णित मया ।
लक्षितस्याथजातस्य सारो व्यासेन कीर्तित ॥
स्कन्दाह्वयस्यात्र खण्डा सप्तैव परिकल्पिता ।
एकाशीतिसहस्रन्तु स्कान्द सर्व्वावकृन्तनम् ॥
य शृणोति पठेद्वापि स तु साक्षाच्छिव स्थित ।
यत्र माहेश्वरा धर्मा षण्मुखेन प्रकाशिता ॥
कल्पे तत्पुरुषे वृत्ता सर्वसिद्धिविधायिका ।

( नारदपुराणे १०४ अध्याय )

(१) तत्र प्रथमे खण्डे

तस्य माहेश्वरश्चाद्य खण्ड पापप्रणाशन ॥
किञ्चिन्न्यूनार्कसाहस्रो बहुपुण्यो वृहत्कथ ।
सुचरित्रशतैर्युक्त स्कन्दमाहात्म्यसूचक ॥
यत्र केदारमाहात्म्ये पुराणोपक्रम पुरा ।
दक्षयज्ञकथा पश्चाच्छिवलिङ्गार्चने फलम् ॥
समुद्रमथनाख्यान देवेन्द्रचरित तत ।
पार्वत्या समुपाख्यान विवाहस्तदनन्तरम् ॥
कुमारोत्पत्तिकथन ततस्तारकसङ्गर ।
तत पशुपताख्यान चण्डाख्यानसमाचितम् ॥
द्यूतप्रवर्त्तनाख्यान नारदेन समागम ।
तत कुमारमाहात्म्ये पञ्चतीर्थकथानकम् ॥
धर्म्मवर्म्मनृपाख्यान नदीसागरकीर्त्तनम् ।
इन्द्रद्युम्नकथा पश्चान्नाडीजङ्घकथाचिता ॥
प्रादुर्भावस्ततो मह्या कथा दमनकस्य च ।
महीसागरसयोग कुमारेशकथा तत ॥
ततस्तारकयुद्धञ्च नानाख्यानसमाचितम् ।
वधश्च तारकस्याथ पञ्चलिङ्गनिवेशनम् ॥
द्वीपाख्यान तत पुण्य ऊर्ध्वलोकव्यवस्थित ।
ब्रह्माण्डस्थितिमानञ्च वकरेशकथानकम् ॥
महाकालसमुद्भूति कथा चास्य महाद्भुता ।
वासुदेवस्य माहात्म्य कोटितीर्थं तत परम् ॥

नानातीर्थसमाख्यान गुप्तक्षेत्रे प्रकीर्त्तितम् ।
पाण्डवाना कथा पुण्या महाविद्याप्रसाधनम ॥
तीथयात्रासमाप्तिश्च कौमारमिदमद्भुतम ।
अरुणाचलमाहात्म्ये सनकब्रह्मसकथा ॥
गौरीतप समाख्यान तत्तत्तीथनिरूपणम ।
महिषासुरजाख्यान वधश्चास्य महाद्भुत ॥
शोणाचले शिवास्थान नित्यदा परिकीर्त्तिनम ।
इत्येष कथित स्कन्दे खण्डो माहेश्वरोऽद्भुत ॥

( ५ ) **द्वितीये वैष्णवखण्डे**

द्वितीयो वैष्णव खण्डस्तस्याख्यानानि मे शृणु ।
प्रथम भूमिवाराह समाख्यान प्रकीर्तितम् ॥
यत्र वोचककुघ्रस्य माहात्म्य पापनाशनम ।
कमलाया कथा पुण्या श्रीनिवासस्थितिस्तत ॥
कुलालाख्यानकश्चात्र सुवर्णमुखरी कथा ।
नानाख्यानसमायुक्ता भारद्वाजकथाद्भुता ॥
मतङ्गाञ्जनसवाद कीत्तित पापनाशन ।
पुरुषोत्तममाहात्म्य कीर्त्तित चोत्कले तत ॥
माकण्डेयसमाख्यानमम्बरीषस्य भूपते ।
इन्द्रद्युम्नस्य चाख्यान विद्यापतिकथा शुभा ॥
जैमिने समपाख्यान नारदस्यापि वाडव ! ।
नीलकण्ठसमाख्यान नार्रसिहोपवर्णनम ॥
अश्वमेधकथा राज्ञो ब्रह्मलोकगतिस्तथा ।
रथयात्राविधि पश्चाज्जन्मस्नानविधिस्तथा ॥
दक्षिणामूर्त्युपाख्यान गुण्डिचाख्यानक तत
रथरक्षाविधानञ्च शयनोत्सवकीर्त्तनम् ॥
श्वेतोपाख्यानमत्रोक्त वह्न्युत्सवनिरूपणम् ।
दोलोत्सवो भगवतो व्रत सावत्सराभिधम् ॥
पूजा च कामिभिर्विष्णोरुद्दालकनियोगक ।
मोक्षसाधनमत्रोक्त नानायोगनिरूपणम् ॥
दशावतारकथन स्नानादिपरिकीतनम् ।
ततो बदरिकायाश्च माहात्म्य पापनाशनम् ॥
अग्न्यादितीथमाहात्म्य वैनतेयशिलाभवम् ।
कारण भगवद्वासे तीर्थं कापालमोचनम् ॥

पञ्चधाराभिध तीर्थं मेरुसस्थापन तथा ।
तत कार्त्तिकमाहात्म्ये माहात्म्य मदनालसम् ॥
धूम्रकोशसमारयान दिनकृत्यानि कार्तिके ।
पञ्चभीष्मव्रताख्यान कीर्त्तिद भुक्तिमुक्तिदम् ॥
तद्व्रतस्य च माहात्म्ये विधान स्नानज तथा ।
पुण्ड्रादिकीत्तनञ्चात्र मालाधारणपुण्यकम् ॥
पञ्चामृतस्नानपुण्य घण्टानादादिज फलम् ।
नानापुष्पार्चनफल तुलसीदलज फलम् ॥
नैवेद्यस्य च माहात्म्य हरिवासन (र) कीतनम् ।
अखण्डैकादशीपुण्य तथा जागरणस्य च ॥
मत्स्योत्सवविधानञ्च नाममाहात्म्यकीर्त्तनम् ।
ध्यानादिपुण्यकथन माहात्म्य मथुराभवम् ॥
मथुरातीथमाहात्म्य पृथगुक्त तत परम् ।
वनाना द्वादशानाञ्च माहात्य कीर्त्तित तत ॥
श्रीमद्भागवतस्यात्र माहात्म्य कीर्त्तित परम् ।
वज्रशाण्डिल्यसम्वादमन्तर्लीलाप्रकाशकम् ॥
ततो माघस्य माहात्म्य स्नानदानजपोद्भवम् ।
नानाख्यानसमायुक्त दशाध्याये निरूपितम् ॥
ततो वैशाखमाहात्म्य शय्यादानादिज फलम् ।
जलदानादिविधय कामाख्यानमत परम् ॥
श्रुतदेवस्य चरित व्याधोपाख्यान्मद्भुतम् ।
तथाक्षयतृतीयादेर्विशेषात्पुण्यकीत्तनम् ।
ततस्त्वयोध्यामाहात्म्ये चक्रब्रह्माह्वतीथके ॥
ऋणपापविमोक्षाख्ये तथाधारसहस्रकम् ।
स्वगद्वार चन्द्रहरिधम्महर्य्युपवर्णनम् ॥
स्वर्णवृष्टेरुपाख्यान तिलोदा सरयू युति ।
सीताकुण्ड गुप्तहरि सरयूर्घर्घराचय ॥
गोप्रचारञ्च दुग्धोद गुरुकुण्डादिपञ्चकम् ।
घोषार्कादीनि तीर्थानि त्रयोदश तत परम् ॥
गयाकूपस्य माहात्म्य सर्व्वाघविनिवर्त्तकम् ।
माण्डव्याश्रमपूर्वाणि तीर्थानि तदनन्तरम् ॥
अजितादिमानसादितीर्थानि गदितानि च ।
इत्येष वैष्णव खण्डो द्वितीय परिकीर्तित ॥

**(३) तृतीये ब्रह्मखण्डे**

अत पर ब्रह्मखण्ड मरीचे ! शृणु पुण्यदम् ।
यत्र वै सेतुमाहात्म्ये फल स्नानेक्षणोद्भवम् ॥
गालवस्य तपश्चर्य्या राक्षसाख्यानक तत ।
चक्रतीर्थादिमाहात्म्य देवीपतनसयुतम् ॥
वेतालतीथमहिमा पापनाशादिकीत्तनम् ।
मङ्गलादिकमाहात्म्य ब्रह्मकुण्डादिवर्णनम् ॥
हनूमत्कुण्डकहिमागस्त्यतीथभव फलम् ।
रामतीर्थादिकथन लक्ष्मीतीथनिरूपणम् ॥
शङ्खादितीर्थमहिमा तथासाध्यामृतादिज ।
धनुष्कोट्यादिमाहात्म्य क्षीरकुण्डादिज तथा ॥
गायत्र्यादिकतीर्थाना माहात्म्य चात्र कीर्त्तितम् ।
रामनाथस्य महिमा तत्त्वज्ञानोपदेशनम् ॥
यात्राविधानकथन सेतौ मुक्तिप्रद नृणाम् ।
धर्म्मारण्यस्य माहात्म्य तत परमुदीरितम् ॥
स्थाणु स्कन्दाय भगवान् यत्र तत्त्वमुपादिशत् ।
धर्म्मारण्यसुसभूतिस्तत्पुण्यपरिकीर्त्तनम् ॥
कमसिद्धे समाख्यान ऋषिवशनिरूपणम् ।
अप्सरातीथमुख्याना माहात्म्य यत्र कीत्तनम् ॥
वर्णानामाश्रमाणाञ्च धम्मतत्त्वनिरूपणम् ।
दवस्थानविभागश्च वकुलाककथा शुभा ॥
छत्रा नन्दा तथा शान्ता श्रीमाता च मतङ्गिनी ।
पुण्यदात्र्य समाख्याता यत्र देव्य समास्थिता ॥
इन्द्रेश्वरादिमाहात्म्य द्वारकादिनिरूपणम् ।
लोहासुरसमाख्यान गङ्गाकूपनिरूपणम् ॥
श्रीरामचरितञ्चैव सत्यमन्दिरवर्णनम् ।
जीर्णोद्धारस्य कथन शासकप्रतिपादनम् ॥
जातिभेदप्रकथन स्मृतिधर्म्मनिरूपणम् ।
ततस्तु वैष्णवा धर्म्मा नानाख्यानैरुदीरिता ॥
चातुर्म्मास्ये तत पुण्ये सर्वधर्म्मनिरूपणम् ।
दानप्रशसा तत्पश्चाद् व्रतस्य महिमा तत ॥
तपसश्चैव पूजाया सच्छिद्रकथन तत ।
तद्वृत्तीना भिदाख्यान शालग्रामनिरूपणम् ॥

तारकस्य वधोपायो त्र्यक्षाच्चर्चा महिमा तथा ।
विष्णो शापश्च वृक्षत्व पार्व्वत्यनुतपस्तत ॥
हरस्य ताण्डव नृत्य रामनामनिरूपणम् ।
हरस्य लिङ्गपतन तथा बैजवनस्य च ॥
पार्वतीजन्मचरित तारकस्य वधोऽद्भुत ।
प्रणवैश्वयकथन तारकाचरित पुन ॥
दक्षयज्ञसमाप्तिश्च द्वादशाक्षरभूषणम् ।
ज्ञानयोगसमाख्यान महिमा द्वादशाक्षरे ॥
श्रवणादिकपुण्यञ्च कीर्त्तित शर्म्मद नृणाम् ।

## तृतीयब्रह्मखण्डस्योत्तरभागे

ततो ब्रह्मोत्तरे भागे शिवस्य महिमाद्भुत ।
पञ्चाक्षरस्य महिमा गोकर्णमहिमा तत ॥
शिवरात्रेश्च महिमा प्रदोषव्रतकीर्त्तनम् ।
सोमवारव्रतञ्चापि सीमन्तिन्या कथानकम् ॥
भद्रायूत्पत्तिकथन सदाचारनिरूपणम् ।
शिववर्म्म समुद्देशो भद्रायूद्वाहवर्णनम् ॥
भद्रायुमहिमा चापि भस्ममाहात्म्यकीर्त्तनम् ।
शवराख्यानकञ्चैव उमामाहेश्वरव्रतम् ॥
रुद्राक्षस्य च माहात्म्य रुद्राध्यायस्य पुण्यकम् ।
श्रवणादिकपुण्यञ्च ब्रह्मखण्डोऽयमीरित ॥

## (४) चतुर्थे काशीखण्डे

अत परं चतुर्थन्तु काशीखण्डमनुत्तमम ।
विन्ध्यनारदयोर्यत्र सम्वाद परिकीर्त्तित ॥
सत्यलोकप्रभावश्चागस्त्यवासे सुरागम ।
पतिव्रताचरित्रञ्च तीर्थचर्य्याप्रशसनम् ॥
ततश्च सप्तपुर्याख्या सयमिन्या निरूपणम् ॥
बुधस्य च तथेन्द्राग्न्योर्लोकाप्ति शिवशर्म्मण ।
अग्ने समुद्भवश्चैव क्रव्याद्वरुणसम्भव ।
गन्धवत्यलकापुर्य्योरीश्वर्य्याश्च समुद्भव ॥
चन्द्रोडुबुधलोकाना कुजेज्याकभुवा क्रमात् ।
सप्तर्षीणा ध्रुवस्यापि तपोलोकस्य वर्णनम् ।
ध्रुवलोककथा पुण्या सत्यलोकनिरीक्षणम् ।

स्कन्दागस्त्यसमालापो मणिकर्णीसमुद्भव ॥
प्रभावश्चापि गङ्गाया गङ्गानामसहस्रकम् ।
वाराणसीप्रशसा च भैरवाविभवस्तत ॥
दण्डपाणिज्ञानवाप्योरुद्भव समनन्तरम् ।
तत कलावत्याख्यान सदाचारनिरूपणम् ॥
ब्रह्मचारिसमाख्यान तत स्त्रीलक्षणानि च ।
कृत्याकृत्यविनिर्देशो ह्यविमुक्तेशवर्णनम् ॥
गृहस्थयोगिनो धर्म्मा कालज्ञान तत परम् ।
दिवोदासकथा पुण्या काशीवणनमेव च ॥
योगिचर्च्चा च लोलार्कोत्तरशाम्बर्कजा कथा ।
द्रुपदार्कस्य ताक्ष्यार्ख्यारुणाकस्योदयस्तत ॥
दशाश्वमेधतीर्थाख्या मन्दराच्च गणागम ।
पिशाचमोचनाख्यान गणेशप्रेषणन्तत ॥
मायागणपतेश्चाथ भुवि प्रादुर्भवस्तत ।
विष्णुमायाप्रपञ्चोऽथ दिवोदासविमोक्षणम् ॥
तत पञ्चनदोत्पत्तिर्बिन्दुमाधवसम्भव ।
ततो वैष्णवतीर्थाख्या शूलिन काशिकागम ॥
जैगीषव्येण सम्वादो ज्येष्ठे शाखा महेशितु ।
क्षेत्राख्यान कन्दुकेशव्याघ्रेश्वरसमद्भव ॥
शैलेशरत्नेश्वरयो कृत्तिवासस्य चोद्भव ।
देवतानामधिष्ठान दुर्गासुरपराक्रम ॥
दुर्गाया विजयश्चाथ ओङ्कारेशस्य वणनम् ।
पुनरोङ्कारमाहात्म्य त्रिलोचनसमुद्भव ॥
केदाराख्या च धर्म्मेशकथा विष्णुभुजोद्भवा ।
वीरेश्वरसमाख्यान गङ्गामाहात्म्यकीत्तनम् ॥
विश्वकर्म्मेशमहिमा दक्षयज्ञोद्भवस्तथा ।
सतीशस्यामृतेशादेर्भुजस्तम्भ पराशरे ॥
क्षेत्रतीर्थकदम्बश्च मक्तिमण्डपसत्कथा ।
विश्वेशविभवश्चाथ ततो यात्रापरिक्रम ॥

## (५) पञ्चमे अवन्तीखण्डे

अत पर त्ववन्त्याख्य शृणु खण्डञ्च पञ्चकम् ।
महाकालवनाख्यान ब्रह्मशीर्षच्छिदा ततः ॥

प्रायश्चित्तविधिश्चाग्नेरुत्पत्तिश्च सुरागम ।
देवदीक्षा शिवस्तोत्र नानापातकनाशनम् ॥
कपालमोचनाख्यान महाकालवनस्थिति ।
तीर्थं कलकलेशस्य सर्व्वपापप्रणाशनम् ॥
कुण्डमप्सरसञ्ज्ञञ्च सरो रुद्रस्य पुण्यदम् ।
कुडवेशञ्च विद्याध्र मकटेश्वरतीर्थकम् ॥
स्वर्गद्वार चतु सिन्धुतीर्थं शङ्करवापिका ।
सकरार्कं गन्धवती तीर्थं पापप्रणाशनम् ॥
दशाश्वमेधिकानशा तीर्थं च हरिसिद्धिदम् ।
पिशाचकादियात्रा च हनूमत्कवचेश्वरौ ॥
महाकालेशयात्रा च वल्मीकेश्वरतीर्थकम् ।
शक्रेशमेशोपाख्यान कुशस्थल्या प्रदक्षिणम् ॥
अक्रूरमन्दाकिन्यङ्कपादचन्द्रार्कवैभवम् ।
करमेश कुक्कुटेश लकुटकेशादितीर्थकम् ।
मार्कण्डेश यज्ञवापी सोमेश नरकान्तकम् ।
केदारेश्वररामेशसौभाग्येशनराककम् ॥
केशार्कं शक्तिभेदञ्च स्वर्णसारमुखानि च ।
ओङ्कारेशादितीर्थानि अन्धकस्तुतिकीर्त्तनम् ।
कालारण्ये लिङ्गसख्या स्वणशृङ्गाभिधानकम् ।
कुशस्थल्या अवन्त्याश्चोज्जयिन्या अभिधानकम् ॥
पद्मावती कुमुद्वत्यमरावतीतिनामकम् ।
विशाला प्रतिकल्पाभिधाने च ज्वरशान्तिकम् ॥
शिवनामादिकफल नागोद्गीता शिवस्तुति ।
हिरण्याक्षवधाख्यान तीथ सुन्दरकुण्डकम् ॥
नीलगङ्गा पुष्कराख्य विन्ध्यवासनतीर्थकम् ।
पुरुषोत्तमाधिमास तत्तीर्थञ्चाघनाशनम् ॥
गोमती वामन कुण्डो विष्णोर्नामसहस्रकम् ।
वीरेश्वरसर कालभैरवस्य च तीर्थकम् ॥
महिमा नागपञ्चम्या नृसिहस्य जयन्तिका ।
कुडुवेश्वरयात्रा च देवसाधककीर्त्तनम् ॥
कर्कराजाख्यतीर्थञ्च विघ्नेशादिसुरोहनम् ।
रुद्रकुण्डप्रभृतिषु बहुतीर्थनिरूपणम् ॥
यात्राष्टतीर्थजा पुण्या रेवामाहात्म्यमुच्यते ।

धर्म्मपुत्रस्य वैराग्ये मार्कण्डेयेन सङ्गम ॥
प्राग्लयानुभवाख्यान अमृता परिकीर्त्तनम् ।
कल्पे कल्पे पृथक् नाम नर्म्मदाया प्रकीर्त्तितम् ॥
स्तवमार्षं नार्मदञ्च कालरात्रिकथा तत ।
महादेवस्तुति पश्चात् पृथक्कल्पकथाद्भुता ॥
विशल्याख्यानक पश्चाज्जालेश्वरकथा तथा ।
गौरीव्रतसमाख्यान त्रिपुरज्वालनन्तत ॥
देहपातविधानञ्च कावेरीसङ्गमस्तत ।
दारुतीर्थं ब्रह्मावर्तं यत्रेश्वरकथानकम् ॥
अग्नितीर्थं रवितीर्थं मेघनादादिदारुकम् ।
देवतीर्थ नर्म्मदेश कपिलाख्यकरञ्जकम् ॥
कुण्डलेशं पिप्पलाद विमलेशञ्च शूलभित् ।
शचीहरणमाख्यानमन्धकस्य वधस्तत ॥
शूलभेदोद्भवो यत्र दानधर्म्मा. पृथग्विधा ॥
आख्यान दीर्घतपसऋष्यशृङ्गकथा तत ।
चित्रसेनकथा पुण्या काशिराजस्य मोक्षणम् ।
ततो देवशिलाख्यान शवरीचरिताचितम् ।
व्याधाख्यान तत पुण्य पुष्करिण्यर्कतीर्थकम् ।
आदित्येश्वरतीर्थञ्च शक्रतीर्थं करोटिकम् ।
कुमारेशमगस्त्येश च्यवनेशञ्च मातृजम् ॥
लोकेश धनदेशञ्च मङ्गलेशञ्च कामजम् ।
नागेशञ्चापि गोपार गौतम शङ्खचूडजम् ॥
नारदेश नन्दिकेश वरुणेश्वरतीर्थकम् ।
दधिस्कन्दादितीर्थानि हनूमन्तेश्वरन्तत ॥
रामेश्वरादितीर्थानि सोमेश पिङ्गलेश्वरम् ।
ऋणमोक्ष कपिलेश पूतिकेश जलेशयम् ॥
चण्डार्कयमतीर्थञ्च कल्होडीशञ्च नान्दिकम् ।
नारायणञ्च कोटीशं व्यासतीर्थं प्रभासकम् ॥
नागेश सङ्कर्षणक मन्मथेश्वरतीर्थकम् ।
एरण्डीसङ्गम पुण्य सुवर्णशिलतीर्थकम् ॥
करञ्जं कामह तीर्थं भाण्डीर रोहिणीभवम् ।
चक्रतीर्थं धौतपापं स्कान्दमाङ्गिरसाह्वयम् ॥
कोटितीर्थमयोन्याख्यमङ्गाराख्य त्रिलोचनम् ।

इन्द्रेश कम्बुकेशञ्च सोमेश कोहनेशकम् ॥
नार्म्मद चार्कमाग्नेय भार्गवेश्वरमुत्तमम् ।
ब्राह्म दैव च भागेशमादिवाराहकेश्वरम् ॥
रामेशमथ सिद्धेशमाहात्म्य कङ्कटेश्वरम् ।
शाक्र सौम्यञ्च नान्देश तापेश रुक्मिणीभवम ॥
योजनेश वराहेश द्वादशीशिवतीर्थकम् ।
सिद्धेश मङ्गलेशञ्च लिङ्गवाराहतीर्थकम् ॥
कुण्डेश श्वेतवाराह भार्गवेश रवीश्वरम् ।
शुक्लादीनि च तीर्थानि हूँकारस्वामितीथकम ॥
सङ्गमेश नारकेश मोक्ष सार्पञ्च गोपकम ।
नाग साम्बञ्च सिद्धेश मार्कण्डाक्रूरतीर्थके ॥
कामोदशूलारोपाख्यो माण्डव्य गोपकेश्वरम् ।
कपिलेश पिङ्गलेश भूतेश गागगौतमे ॥
आश्वमेध भृगुकच्छ केदारेशञ्च पापनुत् ।
कनखलेश जालेश शालग्राम वराहकम् ॥
चन्द्रप्रभासमादित्य श्रीपत्याख्यञ्च हसकम् ।
मूलस्थानञ्च शूलेशमाश्विन चित्रदैवकम् ॥
शिखीश कोटितीर्थञ्च दशकन्य सुवर्णकम् ।
ऋणमोक्ष भारभूतिरत्रास्ते पुखमुण्डिमम् ॥
आमलेश कपालेश शृङ्गेरण्डीभवन्तत ।
कोटितीथ लोटणेश फलस्तुतिरत परम् ॥
कृमिजाङ्गलमाहात्म्ये रोहिताश्वकथा तत ॥
धुन्धुमारसमाख्यान वधोपायस्ततोऽस्य च ।
वधो धुन्धोस्तत पश्चात् सतश्चित्रवहोद्भव ॥
महिमास्य ततश्चण्डीशप्रभावो रतीश्वर ॥
केदारेशो लक्षतीथ ततो विष्णुपदीभवम् ।
मुखार च्यवनान्धाख्य ब्रह्मणश्च सरस्तत ॥
चक्राख्य ललिताख्यान तीथञ्च बहुगोमयम् ।
रुद्रावर्त्तञ्च मार्कण्ड तीर्थं पापप्रणाशनम् ॥
रावणेश शुद्धपट देवान्धुप्रेततीथकम् ।
जिह्वोदतीर्थसम्भूतिः शिवोद्भेद फलस्तुति ।
एष खण्डो ह्यवन्त्याख्य शृण्वता पापनाशन ।



### (६) षष्ठे नागरखण्डे

अत पर नागराख्य खण्ड षष्ठोऽभिधीयते ।
लिङ्गोत्पत्तिसमाख्यान हरिश्चन्द्रकथा शुभा ॥
विश्वामित्रस्य माहात्म्यं त्रिशङ्कुस्वगतिस्तथा ।
हाटकेश्वरमाहात्म्ये वृत्रासुरवधस्तथा ॥
नागविलं शङ्खतीर्थमचलेश्वरवर्णनम् ।
चमत्कारपुराख्यान चमत्कारकर परम् ।
गयशीर्षं बालशाख्य बालमण्ड मृगाह्वयम् ॥
विष्णुपादञ्च गोकर्णं युगरूप समाश्रय ।
सिद्धेश्वर नागसरः सप्तर्षेय ह्यगस्तकम् ॥
भ्रूणगर्तं नलेशञ्च भीष्म दुर्वैरमर्कंकम् ।
शर्मिष्ठ सोमनाथञ्च दौर्गमानर्तकेश्वरम् ॥
जामदग्निवधाख्यान नै क्षत्रियकथानकम् ।
रामह्रद नागपुर जडलिङ्गञ्च यज्ञभू ॥
मुण्डीरादि त्रिकार्कञ्च सतीपरिणयस्तथा ।
बालखिल्यञ्च यागेश बालखिल्यञ्च गारुडम् ॥
लक्ष्मीशाप साप्तविंश सोमप्रासादमेव च ।
अम्बावृद्ध पादुकाख्यमाग्नेय ब्रह्मकुण्डकम् ॥
गोमुख लोहयष्ट्याख्यमजापालेश्वरी तथा ।
शानेश्वर राजवापी रामेशो लक्ष्मणेश्वर ।
कुशेशाख्य लवेषाख्य लिङ्ग सर्व्वोत्तमोत्तमम् ॥
अष्टषष्टिसमाख्यान दमयन्त्याश्रिजातकम् ।
ततोऽम्बारेवती चात्र भट्टिकातीर्थसम्भवम् ॥
क्षेमङ्करी च केदारं शुक्लतीर्थं मुखारकम् ।
सत्यसन्नेश्वराख्यान तथा कर्णोत्पला कथा ॥
अटेश्वर याज्ञवल्क्य गौय्य गाणेशमेव च ।
ततो वास्तुपदाख्यानमजागृहकथानकम् ॥
सौभाग्यान्धकशूलेशं धर्म्मराजकथानकम् ॥
मिष्टान्नदेश्वराख्यान गाणपत्यत्रयं तत ।
जाबालिचरितञ्चैव मकरेशकथा तत ॥
कालेश्वर्यन्धकाख्यान कुण्डमाप्सरसन्तथा ।
पुष्यादित्य रौहिताश्व नागरोत्पत्तिकीर्त्तनम् ॥
भार्गव चरितं चैव वैश्वामित्र तत परम् ॥

सारस्वत पैप्पलाद कसारीशञ्च पैण्डिकम् ।
ब्रह्मणो यज्ञचरित सावित्र्याख्यानसयुतम् ।।
रैवत भर्तृयज्ञाख्य मुख्यतीर्थनिरीक्षणम् ।
कौरव हाटकेशाख्य प्रभासं क्षेत्रकत्रयम् ।।
पौष्कर नैमिष धार्म्ममरण्यत्रितय स्मृतम् ।
वाराणसीद्वारकाख्यावन्त्याख्येति पुरीत्रयम् ।।
वृन्दावन खाण्डवाख्य मद्रैकाख्य वनत्रयम् ।
कल्प शालस्तथा नन्दो ग्रामत्रयमनुत्तमम् ।।
असिशुक्लपितृसञ्ज्ञ तीर्थत्रयमुदाहृतम् ।
त्र्यर्बुदो रैवतश्चैव पव्वतत्रयमुत्तमम् ।।
नदीना त्रितय गङ्गा नर्मदा च सरस्वती ।।
साद्धकोटित्रयफलमेकैकञ्चाषु कीर्त्तितम् ।
कूपिका शङ्खतीर्थञ्चामरक बालमण्डनम् ।
हाटकेशक्षेत्रफलप्रद प्रोक्त चतुष्टयम् ॥
शाम्बादित्य श्राद्धकल्प यौधिष्ठिरमथान्धकम् ।
जलशायि चतुर्म्मास्यमशून्यशयनव्रतम् ।।
मङ्कणेश शिवरात्रिस्तुलापुरुषदानकम् ।
पृथ्वीदान वाणकेश कपालमोचनेश्वरम् ॥
पापपिण्ड साप्तलैङ्ग युगमानादिकीर्त्तनम् ।
निम्वेशशाकम्भर्याख्य रुद्रैकादशकीर्त्तनम् ।।
दानमाहात्म्यकथन द्वादशादित्यकीर्त्तनम् ।
इत्येष नागर खण्ड प्रभासाख्योऽधुनोच्यते ।।

**(७) सप्तमे प्रभासखण्डे**

सोमेशो यत्र विश्वेशोऽकस्थल पुण्यद महत् ।
सिद्धेश्वरादिकाख्यान पृथगत्र प्रकीर्त्तितम् ।।
अग्नितीर्थं कपर्द्दीश केदारेश गतिप्रदम् ।
भीमभैरवचण्डीशभास्कराङ्गारकेश्वरा ।।
बुधेज्यभृगुसौरेन्द्रशिखीशा हरविग्रहा ।
सिद्धेश्वराद्या पञ्चान्ये रुद्रास्तत्र व्यवस्थिता ।
वरारोहा ह्यजापाला मगला ललितेश्वरी ।।
लक्ष्मीशो वाडवेशश्चाधीश कामेश्वरस्तथा ।
गौरीशवरुणेशाख्य दुर्वासेश गणेश्वरम् ।
कुमारेशञ्च शाकल्य शकुलोत्तङ्कगौतमम् ।।

दैत्यघ्नेश चक्रतीर्थं सन्निहत्याव्ययन्तथा ।
भूतेशादीनि लिङ्गानि आदिनारायणाह्वयम् ॥
ततश्चक्रधराख्यान शाम्बादित्यकथानकम् ।
कथा कण्टकशोधिन्या महिषघ्न्यास्तत परम् ॥
कपालीश्वरकोटीशबालब्रह्माह्वसत् कथा ।
नरकेशसम्वर्त्तेशनिधीश्वरकथा तत ॥
बलभद्रेश्वरस्याथ गगाया गणपस्य च ।
जाम्बवत्याख्यसरित पाण्डुकूपस्य सत्कथा ॥
शतमेधलक्षमेधकोटिमेधकथा तथा ।
दुर्व्वासार्कघटस्थान हिरण्यासगमोत्कथा ॥
नगरार्कस्य कृष्णस्य सङ्कर्षणसमुद्रयो ।
कुमार्य्या क्षेत्रपालस्य ब्रह्मेशस्य कथा पृथक ॥
पिंगला संगमेशस्य शकराकघटेशयो ।
ऋषितीर्थस्य नन्दाकत्रितकूपस्य कीर्त्तनम् ॥
शशीपानस्य वर्णाकन्यडकुमत्यो कथाद्भुता ।
वाराहस्वामिवृत्तान्त छायालिंगाख्यगुल्फयो ॥
कथा कनकनन्दाया कुन्तीगगेशयोस्तथा ॥
चमसोद्भेदविदुरत्रिलोकेशकथा तत ।
मङ्कणेशत्रैपुरेशषण्डतीथकथा तथा ॥
सूर्यप्राचीवीक्षणयोरुमानाथकथा तथा ।
मूद्वारशूलस्थलयोश्च्यवनार्केशयोस्तथा ॥
अजापालेशबालार्ककुबेरस्थलजा कथा ।
ऋषितोया कथा पुण्या सगालेश्वरकीर्त्तनम् ॥
नारदादित्यकथन नारायणनिरूपणम् ।
तप्तकुण्डस्य माहात्म्य मूलचण्डीशवर्णनम् ।
चतुर्वक्त्रगणाध्यक्षकलम्बेश्वरयो कथा ।
गोपालस्वामिवकुलस्वामिनोमरुता कथा ॥
क्षेमार्कोन्नतविघ्नेशजलस्वामिकथा तथा ।
कालमेधस्य रुक्मिण्या ऊर्वशीश्वरभद्रयो ॥
शङ्खावर्तमोक्षतीर्थं गोष्पदाच्युतसद्मनाम् ।
जालेश्वरस्य हूङ्कारकूपचण्डीशयो कथा ॥
आशापुरस्थविघ्नेशकलाकुण्डकथाऽद्भुता ।
कपिलेशस्य च कथा जरद्गवशिवस्य च ।

नलकर्कोटकेश्वरयोर्हाटकेश्वरजा कथा ॥
नारदेशमन्त्रभूषा दुर्गकूटगणेशजा ।
सुपर्णेलाख्यभैरव्योर्मल्लतीर्थभवा कथा ॥
कीर्त्तनं कर्द्दमालस्य गुप्तसोमेश्वरस्य च ।
बहुस्वर्णेशशृगेशकोटीश्वरकथा तत ॥
माकण्डेश्वरकोटीशदामोदरगृहोत्कथा ।
स्वणरेखा ब्रह्मकुण्ड कुन्तीभीमेश्वरौ तथा ॥
मृगीकुण्डञ्च सवस्व क्षेत्रे वस्त्रापथे स्मृतम् ।
दुर्गाविल्वेशगगेशरैवताना कथाऽद्भुता ॥
ततोऽर्व्वुदेश्वरकथा अचलेश्वरकीर्त्तनम् ।
नागतीर्थस्य च कथा वशिष्ठाश्रमवणनम् ॥
भद्रकणस्य माहात्म्य त्रिनेत्रस्य तत. परम् ।
केदारस्य च माहात्म्य तीर्थागमनकीर्त्तनम् ॥
कोटीश्वररूपतीर्थहृषीकेशकथा तत ।
सिद्धेशशुक्रेश्वरयोमणिकर्णीशकीर्त्तनम् ॥
पगुतीथ यमतीथ-वाराहतीथवणनम् ।
चन्द्रप्रभासपिण्डोदश्रीमाता शुक्लतीथजम् ॥
कात्यायन्याश्च माहात्म्य तत पिण्डारकस्य च ।
तत कनखलस्याथ चक्रमानुषतीथयो ॥
कपिलाग्नितीथकथा तथा रक्तानुबन्धजा ।
गणेशपार्थेश्वरयोर्यात्राया मुद्गलस्य च ॥
चण्डीस्थान नागोद्भवशिर कुण्डमहेशजा ।
कामेश्वरस्य मार्कण्डेयोत्पत्तेश्च कथा तत ॥
उद्दालकेशसिद्धेशगततीथकथापृथक ।
श्रीदेवमातोत्पत्तिश्च व्यासगौतमतीर्थयो ॥
कुलसन्तारमाहात्म्यरामकोटयाव्हतीर्थयो ।
चन्द्रोद्भेदेशानशृङ्गब्रह्मस्थानोद्भवोहनम् ॥
त्रिपुष्कर-रुद्रह्लद-गुहेश्वर-कथा शुभा ।
अविमुक्तस्य माहात्म्यमुमामाहेश्वरस्य च ॥
महौजस प्रभावश्च जम्बुतीर्थस्य वर्णनम् ।
गङ्गाधरमिश्रकयो कथा चाथ फलश्रुति ॥
द्वारकायाश्च माहात्म्य चन्द्रशर्म्मकथानकम् ।
जागराद्याख्यव्रतञ्च व्रतमेकादशीभवम् ॥

महाद्वादशीकाख्यान प्रह्लादर्षिसमागम ।
दुर्व्वासस उपाख्यान यात्रोपक्रमकीर्त्तनम् ॥
गोमत्युत्पत्तिकथन तस्या स्नानादिज फलम् ।
चक्रतीर्थस्य माहात्म्य गोमत्युदधिसङ्गम ॥
सनकादिह्रदाख्यान नृगतीथकथा तत ।
गोप्रचारकथा पुण्या गोपीना द्वारकागम ॥
गोपीसर समाख्यान ब्रह्मतीर्थादिकीर्त्तनम् ।
पञ्चनद्यागमाख्यान नानाख्यानसमन्वितम् ॥
शिवलिङ्गमहातीर्थकृष्णपूजादिकीर्त्तनम् ।
त्रिविक्रमस्य मूर्त्याख्या दुर्वास कृष्णसकथा ॥
कुशदैत्यवधोऽर्च्चाख्या बिशेषार्च्चनजम्फलम् ।
गोमत्या द्वारकायाश्च तीर्थागमनकीर्त्तनम् ॥
कृष्णमन्दिरसप्रेक्षा द्वारवत्यभिषेचनम् ।
तत्र तीर्थावासकथा द्वारका पुण्यकीर्त्तनम् ॥
इत्येष सप्तम प्रोक्त खण्ड प्राभासिको द्विज ।
स्कान्दे सर्वोत्तरकथे शिवमाहात्म्यवर्णने ॥

**एतस्य श्रवणदानादिफलम्**

लिखित्वैतत्तु यो दद्याद्धेमशूलसमान्वितम् ।
माध्या सत्कृत्य विप्राय स शैवे मोदते पदे ॥



## १४—वामनपुराणम्

वामनपुराणे द्वौ भागौ स्तं, पूर्वभाग उत्तरभागश्च, नारदीयपुराणानुसार उत्तरभागस्य वृहद्वामनमपि नामास्ति। अत्र चतस्र सहिता सन्ति (१) माहेश्वरी (२) भागवती (३) सौरी (४) गाणेश्वरी च। अत्र ९५ अध्याया सन्ति। एतत् दशसहस्र (१००००) सख्याकमस्ति। एतत्परिचयश्चैव वर्तते—

त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुख ।
त्रिवर्गमब्रवीत्तच्च वामनं परिकीर्तितम् ॥
पुराणं दशसाहस्र कूर्मकल्पानुगं शिवम् ।
( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच ।

शृणु वत्स ! प्रवक्ष्यामि पुराणं वामनाभिधम् ।
त्रिविक्रमचरित्राढ्यं दशसाहस्रसख्यकम् ॥
कूर्मकल्पसमाख्यानं वर्गत्रयकथानकम् ।
भागद्वयसमायुक्त वक्तृश्रोतृशुभावहम् ॥
( नारदीयपुराणे १०५ अध्याय )

## (१) तत्र पूर्वभागे

पुराणप्रश्न प्रथमं ब्रह्मशीर्षच्छिदा तत ।
कपालमोचनाख्यान दक्षयज्ञविहिंसनम् ॥
हरस्य कालरूपाख्या कामस्य दहनन्तत ।
प्रह्लादनारायणयोर्युद्ध देवासुराह्वयम् ॥
सुकेश्यर्कसमाख्यान ततो भुवनकोषकम् ।
तत काम्यव्रताख्यान श्रीदुर्गाचरित तत ।
तपतीचरित पश्चात्कुरुक्षेत्रस्य वर्णनम् ॥
सरो माहात्म्यमतुल पार्वतीजन्मकीर्त्तनम् ।
तपस्तस्या विवाहश्च गौर्य्युपाख्यानकन्तत ॥
तत कौशिक्युपाख्यान कुमारचरित तत ।
ततोऽन्धकवधाख्यान साध्योपाख्यानकन्तत ।
जाबालिचरित पश्चादरजाया कथाद्भुता ॥
अन्धकेश्वरयोयुद्ध गणत्व चान्धकस्य च ।
मरुता जन्म कथन बलेश्च चरित तत ॥
ततस्तु लक्ष्म्याश्चरित त्रैविक्रममत परम् ।
प्रह्लादतीर्थयात्राया प्रोच्यन्ते तत्कथा शुभा ॥
ततश्च धुन्धुचरित प्रेतोपाख्यानक तत ।
त्रिविक्रमचरित्रान्ते ब्रह्मप्रोक्त स्तवोत्तम ॥
प्रह्लादबलिसंवादे सुतले हरिशसनम् ।
इत्येष पूर्वभागोऽस्य पुराणस्य तवोदित ॥

## (२) तदुत्तरभागे च

शृणु तस्योत्तर भाग बृहद्वामनसञ्ज्ञकम् ।
माहेश्वरी भगवती सौरी गाणेश्वरी तथा ॥
चतस्र सहिताश्चात्र पृथक् साहस्रसख्यया ।

माहेश्वर्यान्तु कृष्णस्य तद्भक्तानाञ्च कीर्त्तनम् ॥
भागवत्या जगन्मातुरवतारकथाद्भुता ।
सौर्य्या सूर्य्यस्य महिमा गदित पापनाशन ॥
गणेश्वर्य्या गणेशस्य चरितश्च महेशितु ।
इत्येतद् वामन नाम पुराण सुविचित्रकम् ॥
पुलस्त्येन समाख्यात नारदाय महात्मने ।
ततो नारदत प्राप्त व्यासेन सुमहात्मना ॥
व्यासात्तु लब्धवान् वत्स ! तच्छिष्यो रोमहर्षण ।
स चाख्यास्यति विप्रेभ्यो नैमिषीयेभ्य एव च ॥
एव परम्पराप्राप्त पुराण वामन शुभम् ।

**एतच्छ्रवणफलमितिकर्तव्यतानिर्देशो यथा**

ये पठन्ति च शृण्वन्ति तेऽपि यान्ति परा गतिम् ।
लिखित्वैतत्पुराणन्तु य शरद्विषुवेऽर्पयेत् ॥
विप्राय वेदविदुषे घृतधेनुसमाचितम् ।
स समुद्धृत्य नरकान्नयेत्स्वग पितृन् स्वकान् ।
देहान्ते भुक्तभोगोऽसौ याति विष्णो परम्पदम् ॥



## १५—कूर्मपुराणम्

कूर्मपुराणेऽपि भागद्वय विद्यते, पूर्वभाग उत्तरभागश्च । तत्रोत्तरे भागे चतस्र संहिता सन्ति (१) ब्राह्मीसंहिता (२) भागवतीसंहिता (३) सौरीसंहिता (४) वैष्णवीसंहिता च । तत्रापि भागवतीसंहिताया पञ्च पादा सन्ति । अत्र पूर्वभागे ५३, उत्तरे च ४६ सकलनया ९९ अध्याया सन्ति । एतच्च नारदीयपुराणानुसार सप्तदशसहस्र (१७०००) सख्याकमस्ति मत्स्यपुराणानुसार च अष्टादश (१८०००) सहस्रात्मकमस्ति । एतत्परिचयश्चैव विद्यते—

यत्र धर्म्मार्थकामाना मोक्षस्य च रसातले ।
माहात्म्य कथयामास कूर्मरूपो जनादन ॥
इन्द्रद्युम्नप्रसङ्गेन ऋषिभ्य शुक्रसन्निधौ ।
अष्टादशसहस्राणि लक्ष्मीकल्पानुषङ्गिकम् ॥
( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच—

शृणु वत्स ! मरीचेऽद्य पुराण कूर्म्मसञ्ज्ञितम् ।
लक्ष्मीकल्पानुचरित यत्र कूर्म्मवपुर्हरि. ॥
धर्म्मार्थकाममोक्षाणां माहात्म्यञ्च पृथक पृथक् ।
इन्द्रद्युम्नप्रसगेन प्राहर्षिभ्यो दयाधिकम् ॥
तत्सप्तदशसाहस्र सचतु सहित शुभम् ।
नानाकथाप्रसगेन नृणा सद्गतिदायकम् ॥
( नारदीयपुराणे १०६ अध्याय )

## १ तत्र पूर्वभागे

तत्र पूर्वविभागे तु पुराणोपक्रम॰ पुरा ।
लक्ष्मीप्रद्युम्नसम्वाद कूर्मर्षिगणसङ्कथा ॥
वर्णाश्रमाचारकथा जगदुत्पत्तिकीर्त्तनम् ।
कालसख्या समासेन लयान्ते स्तवन विभो ॥
तत सङक्षेपत सर्ग शाङ्कर चरित तथा ।
सहस्रनाम पार्वत्या योगस्य च निरूपणम् ॥
भृगुवशसमाख्यान तत स्वायम्भुवस्य च ।
देवादीना समुत्पत्तिर्दक्षयज्ञाहृतिस्तत ॥
दक्षसृष्टिकथा पश्चात् कश्यपान्वयकीर्त्तनम् ।
आत्रेयवशकथन कृष्णाय चरित शुभम् ॥
मार्कण्डकृष्णसवादो व्यासपाण्डवसकथा ।
युगधर्म्मानुकथन व्यासजैमिनिकी कथा ॥
वाराणस्याश्च माहात्म्य प्रयागस्य तत परम ।
त्रैलोक्यवर्णनञ्चैव वेदशाखानिरूपणम् ॥

## (२) उत्तरभागे च

उत्तरेऽस्य विभागे तु पुरा गीतेश्वरी तत ।
व्यासगीता तत प्रोक्ता नानाधर्म्मप्रबोधिनी ॥
नानाविधाना तीर्थाना माहात्म्यञ्च पृथक तत ।
नानाधर्मप्रकथन ब्राह्मीय सहिता स्मृता ॥
अत पर भगवती सहितार्थनिरूपणे ।
कथिता यत्र वर्णाना पृथग्वृत्तिरुदाहृता ॥
पादेऽस्या प्रथमे प्रोक्ता ब्राह्मणाना व्यवस्थिति ।

सदाचारात्मिका वत्स ! भोगसौख्यविवर्द्धिनी ॥
द्वितीये क्षत्रियाणान्तु वृत्ति सम्यक्प्रकीर्तिता ।
यया त्वाश्रितया पाप विधूयेह व्रजेद्दिवम ॥
तृतीये वैश्यजातीना वृत्तिरुक्ता चतुर्विधा ।
यया चरितया सम्यक लभते गतिमुत्तमाम् ॥
चतुर्थेऽस्यास्तथा पादे शूद्रवृत्तिरुदाहृता ।
यया सन्तुष्यति श्रीशो नृणा श्रेयो विवद्धन ॥
पञ्चमेऽस्यास्तत पादे वृत्ति सङ्करजन्मनाम ।
यया चरितयाऽऽप्नोति भाविनीमुत्तमा जनिम् ॥
इत्येषा पञ्चपाद्युक्ता द्वितीया सहिता मुने ! ।
तृतीयात्रोदिता सौरी नृणा कामविधायिनी ॥
षोढा षट्कमसिद्धि सा बोधयन्ती च कामिनाम ।
चतुर्थी वैष्णवी नाम मोक्षदा परिकीर्तिता ॥
चतुष्पदी द्विजादीना साक्षाद् ब्रह्मस्वरूपिणी ।
ता क्रमात् षट्चतुर्द्वीषु साहस्रा, परिकीर्तिता ॥

**श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा**

एतत्कूमपुराणन्तु चतुर्वर्गफलप्रदम् ।
पठता शृण्वता नृणा सर्वोत्कृष्टगतिप्रदम् ॥
लिखित्वेतत्तु यो भक्त्या हेमकूर्मसमन्वितम् ।
ब्राह्मणायायने दद्यात् स याति परमा गतिम् ॥



## १६--मत्स्यपुराणम्

मत्स्यपुराणे २९० अध्याया सन्ति। एतच्च मत्स्यनारदीयपुराणानुसार चतुर्दशसहस्र (१४०००) सख्याकमस्ति । एतत्परिचयश्चैव विद्यते—

श्रुतीना यत्र कल्पादौ प्रवृत्यथ जनार्दन ।
मत्स्यरूपेण मनवे नरसिंहोपवर्णनम ॥
अधिकृत्याऽब्रवीत् सप्तकल्पवृत्त मुनीश्वरा, ।
तन्मात्स्यमिति जानीध्व सहस्राणि चतुदश ॥

( मत्स्यपुराणे ५३ अध्याय )

सूत उवाच—

एतद्व कथित सव यदुक्त विश्वरूपिणा ।
मात्स्य पुराणमखिल धर्मकामार्थसाधनम् ॥
( नारदीयपुराणे १०७ अध्याय

यत्रादौ मनुसम्वादो ब्रह्माण्डकथनन्तथा ।
सांख्य शारीरकम्प्रोक्त चतुर्मुखमुखोद्भवम् ॥
देवासुराणामुत्पत्तिर्मारुतोत्पत्तिरेव च ।
मदनद्वादशीतद्वल्लोकपालाभिपूजनम् ॥
मन्वन्तराणामुद्देशो वैन्यराजाभिवर्णनम् ।
सूर्याद्वैवस्वतोत्पत्तिर्बुधस्यागमनन्तथा ॥
पितृवशानुकथन श्राद्धकालस्तथैव च ।
पितृतीर्थप्रवासश्च सोमोत्पत्तिस्तथैव च ।
कीर्त्तन सोमवशस्य ययातिचरित तथा ।
कार्त्तवीर्यस्य माहात्म्य वृष्णिवशानुकीर्त्तनम् ॥
भृगुशापस्तथा विष्णोर्दैत्यशापस्तथैव च ।
कीर्त्तन पुरुषेशस्य वशो हौताशनस्तथा ॥
पुराणकीर्त्तन तद्वद् क्रियायोगस्तथैव च ।
व्रत नक्षत्रसख्याक मार्कण्डशयन तथा ॥
कृष्णाष्टमीव्रत तद्वद्रोहिणीचन्द्रसज्ञितम् ।
तडागविधिमाहात्म्यं पादपोत्सग एव च ॥
सौभाग्यशयन तद्वदगस्त्यव्रतमेव च ।
तथानन्ततृतीया तु रसकल्याणिनी तथा ॥
आर्द्रानन्दकरी तद्वद् व्रत सारस्वतं पुन ।
उपरागाभिषेकश्च सप्तमीस्नपन पुन ॥
भीमाख्या द्वादशी तद्वदनङ्गशयन तथा ॥
अशून्यशयन तद्वत्तथैवाङ्गारकव्रतम् ।
सप्तमीसप्तक तद्वद्विशोकद्वादशी तथा ॥
मेरुप्रदान दशधा ग्रहशान्तिस्तथैव च ।
ग्रहस्वरूपकथन तथा शिवचतुर्दशी ॥
तथा सवफलत्याग सूर्यवारव्रत तथा ।
सक्रान्तिस्नपन तद्वद्विभूतिद्वादशीव्रतम् ॥
षष्ठिव्रतीना माहात्म्य तथा स्नानविधिक्रम ।
प्रयागस्य तु माहात्म्य सर्वतीर्थानुकीर्तनम् ॥

पैलाश्रमफल तद्वद् द्वीपलोकानुकीर्तनम् ।
तथान्तरिक्षचारश्च ध्रुवमाहात्म्यमेव च ।
भवनानि सुरेन्द्राणा त्रिपुरायोधन तथा ॥
पितृपिण्डदमाहात्म्य मन्वन्तरविनिर्णय ।
वज्राङ्गस्य तु सम्भूति तारकोत्पत्तिरेव च ॥
तारकासुरमाहात्म्य ब्रह्मदेवानुकीर्त्तनम् ।
पार्वतीसम्भवस्तद्वत् तथा शिवतपोवनम् ॥
अनङ्गदेहदाहस्तु रतिशोकस्तथैव च ।
गौरीतपोवन तद्वद्विश्वनाथप्रसादनम् ॥
पार्वतऋषिसम्वादस्तथैवोद्वाहमङ्गलम् ।
कुमारसम्भवस्तद्वत् कुमारविजयस्तथा ॥
तारकस्य वधो घोरो नरसिंहोपवर्णनम् ।
पद्मोद्भवविसर्गस्तु तथैवान्धकघातनम् ॥
वाराणस्यास्तु माहात्म्य नर्मदायास्तथैव च ।
प्रवरानुक्रमस्तद्वत् पितृनाथानुकीर्त्तनम् ॥
ततोभयमुखीदान दान कृष्णाजिनस्य च ।
तथा सावित्र्युपाख्यान राजधर्मास्तथैव च ॥
यात्रानिमित्तकथन स्वप्नमाङ्गल्यकीर्त्तनम् ।
वामनस्य तु माहात्म्य तथैवादिवराहकम् ॥
क्षीरोदमथन तद्वत्कालकूटाभिशासनम् ।
प्रासादलक्षणन्तद्वन्मण्डपानान्तु लक्षणम् ॥
पुरुवशे तु सम्प्रोक्त भविष्यद्राजवर्णनम् ।
तुलादानादि बहुशो महादानानुकीर्त्तनम् ॥
कल्पानुकीर्त्तन तद्वद्ग्रन्थानुक्रमणी तथा ।

## एतन्महत्व पठनादिफल यया

एतत्पवित्रमायुष्यमेतत्कीर्तिविवधनम् ।
एतत्पवित्र कल्याण महापापहर शुभम ॥
अस्मात् पुराणादपि पादमेक पठेत्तु य सोऽपि विमुक्तपाप ।
नारायणाख्य पदमेति नूनमनङ्गवद्दिव्यसुखानि भुङ्क्ते ॥

# १७--गरुड़पुराणम्

गरुडपुराणे खण्डद्वय विद्यते, पूर्वखण्ड उत्तरखण्डश्च। तत्रोत्तरखण्डस्य प्रेतकल्प इत्यपि नामास्ति। यत्र शरीरत्यागानन्तर परलोकगामिना जीवाना विवरण सविस्तर प्रतिपादितमस्ति। अत्र क्रमश २४०, ७८ सकलनया ३१८ अध्याया सन्ति। एतच्च नारदीयपुराणानुसार एकोनविंशतिसहस्र (१९०००) सख्याकमस्ति। पर मत्स्यपुराणानुसारञ्चाष्टादशसहस्र (१८०००) सख्याक मस्ति। एतत्परिचयश्चैव वर्तते —

यदा च गरुडे कल्पे विश्वाण्डाद् गरुडोद्भवम्।
अधिकृत्याब्रवीद् विष्णुर्गारुड तदिहोच्यते॥
तदष्टादशक चैव सहस्राणीह कथ्यते।

( मत्स्यपुराणे ५३ अध्याय )

ब्रह्मोवाच—

मरीचे! शृणु वक्ष्यामि पुराण गारुड शुभम्।
गरुडायाब्रवीत्पृष्टो भगवान्गरुडासन॥
एकोनविंशसाहस्र तार्क्ष्यकल्पकथान्वितम्॥

( नारदीयपुराणे १०८ अध्याय )

## (१) पूर्वखण्डे

पुराणोपक्रमो यत्र सर्ग सक्षेपतस्तत।
सूर्यादिपूजनविधिर्दीक्षाविधिरत परम्।
श्र्यादिपूजा तत पश्चान्नवव्यूहार्चन द्विज!।
पूजाविधानञ्च तथा वैष्णव पञ्जरन्तत॥
योगाध्यायस्ततो विष्णोर्नामसाहस्रकीर्त्तनम्।
ध्यान विष्णोस्तत सूर्यपूजामृत्युञ्जयाचनम्॥
माला मत्रा शिवार्च्चाथ गणपूजा तत परम्।
गोपालपूजा त्रैलोक्यमोहन श्रीधरार्च्चनम्॥
विष्णवर्च्चा पञ्चतत्त्वार्च्चा चक्रार्च्चा देवपूजनम्।
न्यासादिसन्ध्योपास्तिश्च दुर्गार्च्चाथ सुरार्चनम्॥
पूजा माहेश्वरी चात पवित्रारोपणार्च्चनम्।
मूर्तिध्यान वास्तुमान प्रासादानाञ्च लक्षणम्॥
प्रतिष्ठा सवदेवाना पृथक् पूजाविधानत।
योगोऽष्टाङ्गो दानधर्म प्रायश्चित्तविधिक्रिया॥

द्वीपेशनरकाख्यान सूर्य्यव्यूहश्च ज्योतिषम् ।
सामुद्रिक स्वरज्ञान नवरत्नपरीक्षणम् ॥
माहात्म्यमथ तीर्थाना गयामाहात्म्यमुत्तमम् ।
ततो मन्वन्तराख्यान पृथक्पृथग्विभागशः ॥
पित्राख्यान वर्णधर्मा द्रव्यशुद्धि समर्पणम् ।
श्राद्ध विनायकस्यार्चा ग्रहयज्ञस्तथाऽऽश्रमा. ॥
जननाख्य प्रेतशौच नीतिशास्त्र व्रतोक्तय ।
सूर्यवश सोमवशोऽवतारकथन हरे ॥
रामायण हरिवशो भारताख्यानकन्तत ।
आयुर्वेदे निदान प्राक् चिकित्साद्रव्यजा गुणाः ॥
रोगघ्न कवच विष्णोर्गारुडस्त्रैपुरो मनु ।
प्रश्नचूडामणिश्चान्ते हयायुर्वेदकीर्त्तनम् ॥
ओषधीनामकथन ततो व्याकरणोहनम् ।
छन्द शास्त्र सदाचारस्तत स्नानविधि स्मृत ।
तर्पण वैश्वदेवञ्च सन्ध्यापार्वणकम च ।
नित्यश्राद्ध सपिण्डाख्य मर्मसारोऽघनिष्कृति॰ ॥
प्रतिसङक्रम उक्तोऽस्माद् युगधर्मा कृतेः फलम् ।
योगशास्त्रं विष्णुभक्तिनमस्कृतिफल हरे, ॥
माहात्म्य वैष्णवञ्चाथ नारसिहस्तवोत्तमम् ।
ज्ञानामृत गुह्याष्टक स्तोत्र विष्णवर्च्चनाह्वयम् ॥
वेदान्तसाख्यसिद्धान्त ब्रह्मज्ञानात्मक तथा ।
गीतासार फलोत्कीर्त्ति पूर्वखण्डोऽयमीरित ॥

(२) उत्तरखण्डे च

अथास्यैवोत्तरे खण्डे प्रेतकल्प पुरोदित ।
यत्र तार्क्ष्येण सस्पृष्टो भगवानाह वाडव ॥
धर्मप्रकटन पूर्वं योनीना गतिकारणम् ।
दानादिक फलञ्चापि प्रोक्तमत्रौर्ध्वदेहिकम् ॥
यमलोकस्य मार्गस्य वर्णनञ्च तत परम् ।
षोडशश्राद्धफलकं वृत्तानाञ्चात्र वर्णितम् ॥
निष्कृतिर्यममार्गस्य धमराजस्य वैभवम् ।
प्रेतपीडा विनिर्देश. प्रेतचिह्ननिरूपणम् ॥
प्रेताना चरिताख्यान कारणं प्रेतता प्रति ।

प्रेतकृत्यविचारश्च सपिण्डीकरणोक्तय ॥
प्रेतत्वमोक्षणाख्यान दानानि च विमुक्तये ।
आवश्यकोत्तार दान प्रेतसौख्यकर हितम् ॥
शारीरकविनिर्देशो यमलोकस्य वणनम् ।
प्रेतत्वोद्धारकथन कमकर्तृविनिणय ।
मृत्यो पूवक्रियाख्यान पश्चात्कमनिरूपणम् ॥
मध्यषोडशक श्राद्ध स्वगप्राप्तिक्रियोहनम् ।
सूतकस्याथ सख्यान नारायणबलिक्रिया ॥
वृषोत्सर्गस्य माहात्म्य निषिद्धपरिवर्जनम् ।
अपमृत्युक्रियोक्तिश्च विपाक कमणा नृणाम् ॥
कृत्याकृत्यविचारश्च विष्णुध्यान विमुक्तये ॥
स्वगतो विहिताख्यान स्वगसौख्यनिरूपणम् ।
भूर्लोकवणनञ्चैव सप्तधा लोकवणनम् ॥
पञ्चोध्वलोककथन ब्रह्माण्डस्थितिकीर्त्तनम ।
ब्रह्माण्डानेकचरित ब्रह्मजीवनिरूपणम ॥
आत्यन्तिकलयाख्यान फलस्तुतिनिरूपणम् ।
इत्येतद् गारुड नाम पुराण भुक्तिमुक्तिदम् ॥

श्रवणादिफलमितिकर्तव्यतानिर्देशश्च

कीर्तित पापशमन पठता शृण्वतां नृणाम् ।
लिखित्वैतत्पुराणन्तु विषुवे य प्रयच्छति ॥
सौवर्णं हसयुग्माढ्य विप्राय स दिव व्रजेत् ।



## १८—ब्रह्माण्डपुराणम्

ब्रह्माण्डपुराणे चत्वार पादा सन्ति (१) प्रक्रियापाद (२) अनुषङ्गपाद (३) उपोद्घातपाद (४) उपसहारपादश्च । तत्र प्रथम पादद्वय पूर्वभाग उच्यते, तृतीय पादो मध्यमभाग कथ्यते, चतुर्थपादश्चोत्तरभागो निगद्यते । अत्र १६१ अध्याया सन्ति । एतन्नारदीयपुराणानुसार द्वादशसहस्र ( १२००० ) सख्याक मस्ति, मत्स्यपुराणानुसार च शतद्वयाधिकद्वादशसहस्र ( १२२०० ) विद्यते । यथा ब्रह्मपुराणमादिपुराणमुच्यते, तथैवेदमन्तिम पुराणमभिधीयते । मध्ये च

ब्रह्मवैवर्तमस्ति । अतएवोक्तम्—आदावन्ते च मध्ये च हरि सवत्र गीयते । एतत्परिचयश्चैवमस्ति—

ब्रह्मा ब्रह्माण्डमाहात्म्यमधिकृत्याब्रवीत्पुन ।
तच्च द्वादशसाहस्र ब्रह्माण्ड द्विशताधिकम् ॥
भविष्याणा च कल्पाना श्रूयते यत्र विस्तर ।
तद्ब्रह्माण्डपुराण च ब्रह्मणा समुदाहृतम् ॥
( मत्स्यपुराणे ५३ अध्याय )

श्रृणु वत्स ! प्रवक्ष्यामि ब्रह्माण्डाख्य पुरातनम् ।
तच्च द्वादशसाहस्र भाविकल्पकथायुतम् ॥
प्रक्रियाख्योऽनुषङ्गाख्य उपोद्घातस्तृतीयक ।
चतुर्थ उपसहार. पादश्चत्वार एव हि ॥
पूर्वपादद्वय पूर्वो भागोऽत्र समुदाहृत ।
तृतीयो मध्यमो भाग चतुर्थस्तूत्तरो मत ॥
( नारदीयपुराणे १०९ अध्याय )

## (१) तत्र पूर्वभागस्य प्रथमे प्रक्रियापादे

आदौ कृत्यसमुद्देशो नैमिषाख्यानक तत ।
हिरण्यगर्भोत्पत्तिश्च लोककल्पनमेव च ॥
एष वै प्रथम पादो द्वितीय श्रृणु नारद ! ।

## (२) द्वितीये अनुषङ्गपादे

कल्पमन्वन्तराख्यान लोकज्ञान तत परम् ।
मानसीसृष्टिकथन रुद्रप्रसववर्णनम् ॥
महादेवविभूतिश्च ऋषिसगस्तत परम् ।
अग्निना विचयश्चाथ कालसद्भाववर्णनम् ॥
प्रियव्रतान्वयोद्देश पृथिव्यायासविस्तर ।
वर्णन भारतस्यास्य ततोऽन्येषा निरूपणम् ॥
जम्ब्वादिसप्तदीपाख्या ततोऽधोलोकवर्णनम् ।
ऊर्ध्वलोकानुकथन ग्रहचारस्तत परम् ॥
आदित्यव्यूहकथन देवग्रहानुकीर्त्तनम् ।
नीलकण्ठाह्वयाख्यान महादेवस्य वैभवम् ॥
अमावास्यानुकथन युगतत्त्वनिरूपणम् ।
यज्ञप्रवर्तनञ्चाथ युगयोरन्त्ययो कृति ॥

युगप्रजालक्षणञ्च ऋषिप्रवरवर्णनम् ।
वेदाना व्यसनाख्यान स्वायम्भुवनिरूपणम् ॥
शेषमन्वन्तराख्यान पृथिवीदोहनन्तत ।
चाक्षुषेऽद्यतने सर्गो द्वितीयोऽङ्घ्रि पुरोदले ॥

(३) तृतीये ( मध्यमे ) उपोद्घातपादे

अथोपोद्घातपादे च सप्तर्षिपरिकीर्त्तनम् ।
राजापत्यचयस्तस्माद् देवादीना समुद्भव ॥
ततो जयाभिलाषश्च मरुदुत्पत्तिकीर्त्तनम् ।
काश्यपेयानुकथन ऋषिवशनिरूपणम् ॥
पितृकल्पानुकथन श्राद्धकल्पस्तत परम् ।
वैवस्वतसमुत्पत्तिस्सृष्टिस्तस्य तत परम् ॥
मनुपुत्रान्वयश्चान्तो गान्धर्वस्य निरूपणम् ।
इक्ष्वाकुवशकथन वशोऽत्रे सुमहात्मन ॥
अमावसोरन्वयश्च रजेश्चरितमद्भुतम् ।
ययातिचरितञ्चाथ यदुवशनिरूपणम् ॥
कार्तवीर्यस्य चरित जामदग्न्य तत परम् ।
वृष्णिवशानुकथन सगरस्याथ सम्भव ॥
भार्गवस्यानुचरित तथार्यकवधाश्रयम् ।
सगरस्याथ चरित भार्गवस्य कथा पुन ॥
देवासुराहवकथा कृष्णाविर्भाववणनम् ।
इन्द्रस्य च स्तव पुण्य शुक्रेण परिकीर्तित ॥
विष्णुमाहात्म्यकथन बलीवसनिरूपणम् ।
भविष्यराजचरित सम्प्राप्तेऽथ कलौ युगे ॥
एवमुद्घातपादोऽस्य तृतीयो मध्यमे दले ।

(४) चतुर्थे ( उत्तरभागे ) उपसहारपादे

चतुर्थमुपसहार वक्ष्ये खण्डे तथोत्तरे ॥
वैवस्वतान्तराख्यान विस्तरेण यथातथम् ।
पूर्वमेव समुद्दिष्ट सक्षेपादिह कथ्यते ॥
भविष्याणा मनूना च चरित हि तत परम् ।
कल्पप्रलयनिर्देश कालमान तत परम् ॥
लोकाश्चतुर्दश तत कथिता मानलक्षणे ।
वर्णन नरकाणाञ्च विकर्माचरणैस्तत ॥
मनोमयपुराख्यान लय प्राकृतिकस्तत ।

शैवस्याथ पुरस्यापि वर्णनञ्च तत परम् ॥
त्रिविधाद् गुणसम्बन्धाज्जन्तूनां कीर्तितागति ।
अनिर्देश्या प्रतर्क्यस्य ब्रह्मण परमात्मन ॥
अन्वयव्यतिरेकाभ्या वर्णन हि तत परम् ।
इत्येष उपसहार पादो वृत्त स चोत्तर ॥
चतुष्पाद पुराणन्ते ब्रह्माण्ड समुदाहृतम् ।
अष्टादशमनौपम्य सारात्सारतर द्विज ! ॥
ब्रह्माण्ड यच्चतुर्लक्ष पुराणत्वेन पठ्यते ।
तदेव व्यस्य गदितमत्राष्टादशम पृथक् ॥
पाराशर्येण मुनिना सर्वेषामपि मानद ! ।
वस्तुद्रष्ट्राथ तेनैव मुनीना भावितात्मनाम् ॥
मत्त श्रुत्वा पुराणानि लोकेभ्य प्रचकाशिरे ।
मुनयो धर्मशीलास्ते दीनानुग्रहकारिण ॥
मया चेद पुराणन्तु वशिष्ठाय पुरोदितम् ।
तेन शक्तिसुतायोक्त जातूकर्णाय तेन च ॥
व्यासो लब्ध्वा ततश्चैतत् प्रभञ्जनमुखोद्गतम् ।
प्रमाणीकृत्य लोकेऽस्मिन् प्रावर्त्तयदनुत्तमम् ॥

श्रवणादिफलमितिकर्तव्यतानिर्देशो यथा

य इद कीर्तयेद्वत्स ! शृणोति च समाहित ।
स विधूयेह पापानि याति लोकमनामयम् ॥
लिखित्वैतत् पुराणन्तु स्वर्णसिंहासनस्थितम् ।
पात्रेणाच्छादित यस्तु ब्राह्मणाय प्रयच्छति ॥
स याति ब्रह्मणो लोक नात्र कार्या विचारणा ।
मरीचेऽष्टादशैतानि मया प्रोक्तानि यानि ते ॥
पुराणानि तु सक्षेपाच्छ्रोतव्यानि च विस्तरात् ।
अष्टादशपुराणानि य शृणोति नरोत्तम ॥
कथयेद्वा विधानेन नेह भूय स जायते ।
सूत्रमेतत्पुराणानां यन्मयोक्त तवाऽधुना ॥
तन्नित्य शीलनीय हि पुराण फलमिच्छता ।
न दाम्भिकाय पापाय देवगुर्वनुसूयवे ॥
देय कदापि साधूना द्वेषिणे न शठाय च ।
शान्तायारागिचित्ताय शुश्रूषाभिरताय च ॥
निर्मत्सराय शुचये देयं सद्वैष्णवाय च ।

## मत्स्यनारदीयपुराणानुसारमष्टादशपुराणानां

### क्रमः, नामानि, श्लोकसंख्या, अध्यायाश्च

| क्रम | पुराणाना नामानि | नारदीयपुराणानुसार श्लोकसख्या | मत्स्यपुराणानुसार श्लोकसख्या | अध्याय सख्या |
|---|---|---|---|---|
| १ | ब्रह्मपुराणम् | १०००० | १३००० | २४५ |
| २ | पद्मपुराणम् | ५५००० | ५५००० | ६४१ |
| ३ | विष्णुपुराणम् | २३००० | २३००० | १२७ |
| ४ | शिवपुराणम् | २४००० | २४००० | ४६४ |
| ५ | श्रीमद्भागवतम् | १८००० | १८००० | ३३५ |
| ६ | नारदीयपुराणम् | २५००० | २५००० | २०७ |
| ७ | मार्कण्डेयपुराणम् | ९००० | ९००० | १३४ |
| ८ | अग्निपुराणम् | १५००० | १६००० | ४८३ |
| ९ | भविष्यपुराणम् | १४००० | १४५०० | ६०५ |
| १० | ब्रह्मवैवर्तपुराणम् | १८००० | १८००० | २५६ |
| ११ | लिङ्गपुराणम् | ११००० | ११००० | १६३ |
| १२ | वाराहपुराणम् | २४००० | २४००० | २१८ |
| १३ | स्कन्दपुराणम् | ८१००० | ८११०० | १६७१ |
| १४ | वामनपुराणम् | १०००० | १०००० | ९५ |
| १५ | कूर्मपुराणम् | १७००० | १८००० | ९९ |
| १६ | मत्स्यपुराणम् | १५००० | १४००० | २९० |
| १७ | गरुडपुराणम् | १९००० | १८००० | ३१८ |
| १८ | ब्रह्माण्डपुराणम् | १२००० | १२२०० | १६१ |

अष्टादशपुराणाना नाम सख्या तथा क्रम ।
अध्यायाश्च विनिर्दिष्टा चक्रेऽस्मिन् विदुषा मुदे ॥

## श्रीमद्भागवते यथा

ब्राह्म दशसहस्राणि पाद्म पञ्चोनषष्ठि च ।
श्री वैष्णव त्रयोविंश च्चतुर्विंशति शैवकम् ॥ १२।१३।४
दशाष्टौ श्रीभागवत नारद पञ्चविंशति ।
मार्कण्डे नवर्वाह्नि च दशपञ्च चतु शतम् ॥ १२।१३।५
चतुदश भविष्य स्यात्तथा पञ्चशतानि च ।
दशाष्टौ ब्रह्मवैवर्त लैङ्गमेकादशैव तु ॥ १२।१३।६
चतुर्विशति वाराहमेकाशीति सहस्रकम् ।
स्कान्द शत तथा चैक वामन दश कीर्तितम् ॥ १२।१३।७
कौर्म सप्तदशाख्यात मात्स्य तत्तु चतुर्दश ।
एकोनविंशति सौपर्ण ब्रह्माण्ड द्वादशैव तु ॥ १२।१३।८
एव पुराणसन्देहश्चतुर्थंक्ष उदाहृत ।

## देवीभागवते च

चतुर्दशसहस्र च मात्स्यमाद्य प्रकीर्तितम् ।
तथा ग्रहसहस्रं तु माकण्डेय महाद्भुतम् ॥
चतुर्दशसहस्राणि तथा पञ्चशतानि च ।
भविष्य परिसख्यात मुनिभिस्तत्वदर्शिभि ॥
अष्टादशसहस्र वै पुण्य भागवत किल ।
तथा चायुतसख्याक पुराण ब्राह्मसज्ञकम् ॥
द्वादशैव सहस्राणि ब्रह्माण्ड च शताधिकम् ।
तथाष्टादशसाहस्र ब्रह्मवैवर्तमेव च ॥
अयुत वामनाख्य च वायव्य षटशतानि च ।
चतुर्विशतिसख्यात सहस्राणि तु शौनक ! ॥
त्रयोविंशतिसाहस्र वैष्णव परमाद्भुतम् ।
चतुर्विशतिसाहस्र वाराह परमाद्भुतम् ॥
षोडशैव सहस्राणि पुराण चाग्निसज्ञकम् ॥
पञ्चविंशतिसाहस्र नारद परम मतम् ॥
पञ्च पञ्चाशत्साहस्र पद्माख्य विपुल मतम् ।
एकादशसहस्राणि लिंगाख्य चातिविस्तृतम् ॥
एकोनविंशत्साहस्र गारुड हरिभाषितम् ।
सप्तदशसहस्र च पुराण कूमभाषितम् ॥
एकाशीतिसहस्राणि स्कन्दाख्य परमाद्भुतम् । ( १।३-१२ )

स्कन्दपुराणे अष्टादशाना पुराणाना मध्ये दश पुराणानि शैवपुराणानि कथ्यन्ते, तेषु शिवस्य गौरव गीयते। चत्वारि वैष्णवपुराणानि प्रोच्यन्ते, तेषु विष्णोर्महिमा वर्ण्यते। द्वयो ब्रह्मणो महत्व प्रकाश्यते। एकस्मिन् अग्ने महत्व प्रदर्श्यते, एकत्र च सूर्यस्य सर्वसवितृत्व प्रकाश्यते। तथाहि—

तत्र शैवानि शैव च भविष्य च द्विजोत्तमा ।
मार्कण्डेय तथा लैङ्ग वाराह स्कन्दमेव च ॥
मात्स्यमन्यत्तथा कौर्म वामन च मुनीश्वर ।
ब्रह्माण्ड च दशेमानि त्रीणि लक्षाणि सख्यया ॥
ग्रन्थाना महिमा सर्वे शिवस्यैव प्रकाश्यते ।
असाधारणया मूर्त्या नाम्ना साधारणेन च ॥
वदन्ति शिवमेकानि शिवस्तेषु प्रकाश्यते ।
विष्णोर्हि वैष्णव तच्च तथा भागवत शुभम् ॥
नारदीय पुराण च गारुड वैष्णव विदु ।
ब्राह्म पाद्म ब्रह्मणो द्वे अग्नेराग्नेयमेककम् ॥
सवितुर्ब्रह्मवैवतम् एवमष्टादश स्मृतम् ।
चत्वारि वैष्णवानीशविष्णो साम्यपराणि वै ॥
ब्रह्मादिभ्योऽधिक विष्णु प्रवदन्ति जगत्पतिम् ।
ब्रह्मविष्णुमहेशाना साम्य ब्राह्मे पुराणके ॥
अन्येषामधिक देव ब्रह्माण जगता पतिम् ।
प्रवदन्ति दिनाधीश ब्रह्मविष्णुशिवात्मकम् ॥

एवमष्टादशभेदैर्विभक्तेषु पुराणेषु योगबलेन त्रिकालदर्शिना महर्षिणा वेदव्यासेन आदर्शमानवचरित्रचित्रण, सर्वधर्मरहस्यकीर्तन, वर्णाश्रमव्यवस्था-प्रतिपादन, सर्वदर्शनरहस्यसमर्थन, कर्तव्यपथप्रदर्शन, असत्पथनिवृत्तिमार्ग सूचन, ज्ञानस्य भक्ते कर्मणश्च निरूपण, अवतारस्य विवेचन च महता कौशलेन कृतमस्ति। कि बहुना पुराणेषु सर्वोपयोगिनो ज्ञातव्या विषया यथास्थान निवेशिता सन्ति। अत एव पुराणानि भारतीयसस्कृते हृदय-मेवेति कथने नास्ति कश्चिदपि अतिशयोक्तिलेश । अतो हिन्दुजातौ प्राणव-त्प्रियस्य सर्वाभ्यर्हितस्य, वेदवदादरणीयस्य, सर्वै धार्मिकशिरोमणिभि सर्वथा समादृतस्य सम्प्रदायाविरोधेन सर्वदर्शनसिद्धान्तसर्वोपासनारहस्यसमर्थनशील-स्यालौकिकभावगुम्फितस्य भगवत आज्ञास्वरूपस्य पुराणसमूहस्याध्ययन-मवश्य कर्तव्यमेव हिन्दुभि । अत एवोक्तम्—

पुराण मानवो धर्म साङ्गोपाङ्गश्चिकित्सक ।
आज्ञासिद्धानि सर्वाणि न हन्तव्यानि हेतुभि ॥

पुराणेषु क्वचन समाविभाषाया प्राधान्येऽपि पिपठिषूणा तदर्थावगतये महत्सौविध्य वर्तते। पुराणभाषा प्रसादगुणगुम्फिता भावमयी अति मञ्जुला च वर्तते। येन वाला अपि स्वल्पप्रयासेनैव तदध्ययनत पुराणममज्ञा भवितु महन्ति हिन्दुधर्मस्य च समुन्नति कर्तुं शक्नुवन्ति।

## पुराणपञ्चलक्षणम्

अत्र व्याख्याविहीनपारिभाषिकशब्दानां प्रयोग तत्सार्वभौमलोकप्रिय तायाः शङ्कितोऽभिमन्यते विद्वद्भिः।

वस्तुत पुराणानां सवमान्यपरम्परानुसार तेषु सर्वेषु पञ्चानामेव विषयाणा विशेषतो वणन विध्यते। अन्येषां च पुराणोपयोगिना विषयाणा प्रासङ्गितया यत्र यत्र विवेचन कृतमस्ति।

सर्गश्च प्रतिसर्गश्च वशो मन्वन्तराणि च।
वशानुचरितं चेति पुराण पञ्चलक्षणम्॥ वि०पु० ३।३।२४

एतत्पञ्चलक्षणलक्षित पुराणमभिधीयते। सर्वेषु पुराणेषु अस्य लक्षण पञ्चकस्य न्यूनाधिकरूपेण समावेशोऽस्त्येव। एषा पञ्चाना विषयाणा मध्ये कस्मिश्चित्पुराणे कस्यचिदेकस्याधिक्येन वणन विद्यते, कस्यचिच्च सक्षेपो दृश्यते, कुत्रचिच्च कस्यचनैकस्य विषयस्य सातिशयवणनमुपलभ्यते—यथा मार्कण्डेयपुराणे मन्वन्तरवर्णनस्यैव प्राधान्य विद्यते, श्रीमद्भागवते वशानुचरितस्यैव प्राधान्य प्राप्यते, विष्णुपुराणे तु सर्गस्य मुख्यत्व दृश्यते। एव कुत्रचित् पुराणे एकस्य विषयस्याधिक्यमन्येषा च न्यूनत्व निभाल्यते। तस्मात्सर्वेषा पुराणाना यथावदध्ययन विना पुराणानामाध्यात्मिकरहस्य नावगन्तु शक्यते न वा यथार्थज्ञानपरिपाटी परिचेतु,पायते।

### (१) सर्गः

पुराणलक्षणानुसार पुराणेषु सर्गप्रतिसर्गवशमन्वतरवशानुचरितानामेषा पञ्चाना मुख्यतया वर्णनं विद्यते। तत्र क सग इति जिज्ञासाया श्रीमद्भागवते

अव्याकृतगुणक्षोभान् महतस्त्रिवृतोऽहम।
भूतमात्रेन्द्रियार्थानां सम्भव सर्ग उच्यते॥ १२।७।११

साम्यावस्थापन्नस्य त्रिगुणात्मकस्य प्रधानतत्वस्य गुणक्षोभान्महत्तत्व ततोऽहंकारः तत एकादशेन्द्रियपञ्चतन्मात्रा पञ्चमहाभूताना सम्भव सर्गो निगद्यते।

### (२) प्रतिसर्गः ( प्रलयः )

अत्र प्रत्युपसर्गोऽस्ति विरोधार्थक सर्गस्य विरोधी प्रलय इत्यर्थ। तस्मात् प्रतिसर्गपदेन सर्गस्य विपरीत वस्तु प्रलयो ज्ञातव्य। अग प्रलयोभवति चतुर्धा

नैमित्तिकप्रलय:, प्राकृतिकप्रलय:, नित्यप्रलय, आत्यन्तिकप्रलयश्च, तथाहि विष्णुपुराणस्य प्रथमेंऽशे सप्तमेऽध्याये—

नैमित्तिक प्राकृतिकस्तथैवात्यन्तिको लय ।
नित्यश्च सर्वभूतानां प्रलयोऽय चतुर्विध ॥

श्रीमद्भागवते महापुराणे प्रलयशब्दस्य स्थाने सस्थाशब्दो प्रयुक्ताऽस्ति ।

नैमित्तिक प्राकृतिको नित्य आत्यन्तिको लय ।
सस्थेति कविभि: प्रोक्ता चतुर्धास्य स्वभावत ॥ १२।७।१७

## (३) वश:

ब्रह्मण सकाशादुत्पन्नाना राज्ञां भूतभविष्यवर्तमानकुलपरम्परा वश कथ्यते । तथाचोक्त श्रीमद्भागवते द्वादशस्कन्धे सप्तमेऽध्याये—

राज्ञा ब्रह्मप्रसूताना वशस्त्रैकालिकोऽन्वय । १२।७।१६

पुराणानि हिन्दूजातेरितिहासस्य मूलस्रोतासि सन्ति । यद्यपि रामायणे महाभारते च प्रधानतया इतिहासस्यैव वर्णन विद्यते, तथापि पुराणेषु इतिहासस्य विवेचन सर्वोपकारकमतिसुगमतया कृतमस्तीति बहव समालोचका सोल्लास समर्थयन्ति । हिन्दुजातिरतिप्राचीनतमास्ति, सृष्टिकालादिदानी यावदिय स्वरूप सम्यक सरक्षन्ती तथैव तिष्ठति । बहुभिराक्रमणैरपि अस्या मूल सुरक्षितमस्ति । यत्र अन्यासा जातीना वशस्य इतिहासो न सन्तोषजनक उपलभ्यते, तत्र हिन्दुजातेरितिहासस्य वणनमादिकालादेव व्यवस्थित मिलति । हिन्दुजातौ सूर्यवश-चन्द्रवश-वसिष्ठवश-गौतमवश-कश्यपवशादयोऽनेके वशा वर्तन्ते । सृष्टेरारम्भत एवैतेषा वास्तविकी सुव्यवस्थिता वशपरम्परा पुराणेषु विद्यते । यदि पुराणानि नाभविष्यस्तदा एव क्रमबद्ध परम्परासम्पन्न इतिहासो नाप्राप्स्यत, हिन्दुजाते प्राचीनतमच गौरवमनायासेनानक्ष्यत् । हिन्दुजाते: पुनरुत्थानम्, स्ववशजानां कथाया श्रवणेनैव भवितुमर्हति, नान्यथा । अतो हिन्दुजाते वास्तविकस्येतिहासस्य ज्ञानाय, गौरवाय, समुन्नतये च पुराणानि अत्यादरणीयानि सन्ति ।

शङ्का—कियन्त समालोचका कथयन्ति यत् पुराणानां वशावली परस्परविरुद्धा विद्यते, यतोहि एकस्मिन् पुराणे मनुमारभ्य रामपर्यन्तगणनाया यादृशो वशक्रमो विद्यते स एवान्यस्मिन् पुराणे तद्विपरीत उपलभ्यते अत परस्परविरुद्धत्वात् पुराणोक्ता वशावली अप्रामाणिकी अस्ति ।

समीक्षा—सृष्टिकालाद् आरम्भ प्रलयपर्यन्त क्रमबद्ध वशवणन सुगम कार्यं नास्ति । यदि एकैक कृत्वा वर्णयेत् तदा कायमिद सम्पन्न न स्यात् । अत: पुराणेषु क्वचन वशावली क्रमश लिखिताऽस्ति क्वचनच साधारणान् पुरुषानगणयित्वा प्रमुखाणामेवपुरुषाणामुल्लेखोऽस्ति । कुत्रापि तु तेषामेव

महापुरुषाणामुल्लेखोऽस्ति येषा धार्मिकेन जगता महत्वशालिना कार्येण सह सम्बन्धोऽस्ति। अत पुराणोक्तावशपरम्परा सवत्र पितृपुत्रक्रमानुसारमेव न मन्तव्यम्, किन्तु कुत्रचित् अमुकस्य पुत्र कचन च अमुकस्य वशज अमुक पुरुषो जात, इत्येव विरोधाभासस्यपरिहार कतव्य ।

## (४) मन्वन्तराणि

पुराणानुसार सृष्टेर्विभिन्नस्य कालमानस्य द्योतकोऽय शकोऽस्ति। अत पौराणिककालगणनाया महत्व महदुपकारि वर्तते। चतुर्दशमन्वन्तराणा मध्येऽस्मिन् प्रत्येकस्य मन्वन्तरस्धिपति एको विशिष्टो भवति यस्य सहयोगे पञ्च पदार्था सन्ति। अतो मन्वन्तर षडविध प्रोच्यते।

मनो मनुपुत्राणाम्, देवानामिन्द्रस्य, ऋषीणाम्, अशावताराणाञ्च घटनाया उल्लेख मन्वन्तर कथ्यते। तथाचाह श्रीमद्भागवते--

मन्वन्तर मनुर्देवा मनुपुत्रा सुरेश्वरा ।
ऋषयोऽशावतारश्च हरे षडविधमुच्यते ॥१२।७।१५

पौराणिकवशेषु उत्पन्नाना वसुधराणा मूलपुरुषाणा विशिष्ट विवरण यत्र वण्यते तद् वशानुचरितमुच्यते। मनुष्यवशे प्रसूताना महर्षीणा राज्ञा च चरितानि अन्य समाविष्टानि सन्ति। महर्षीणा चरितार्थेक्ष्मा राज्ञा चरितानामेव विशेषविवरण पुराणेषूपलभ्यते।

यदि मन्वन्तरज्ञान न स्यात्तर्हि हिन्दूनामितिहासे महती अव्यवस्था समुपतिष्ठेत। स्वयम्भुमनो समये के ऋषय के च राजान आसन् स्वरोचिषस्य मनो के के सहायका आसन्? उत्तमस्य मनो समये कस्य पुराणस्य प्राधान्यमासीत्, रैवतकमनुकाले कीदृशी व्यवस्था आसीत् इत्यादिप्रश्नाना यथार्थमुत्तर पुराणैर्विना को दातु शक्नुयात्। मन्वन्तरज्ञानमन्तरा कस्यापि ऋषे राज्ञो वा कालस्य कथ यथार्थं ज्ञान भविष्यति? एकस्मिन् कल्पे १४ मनवो भवन्ति, केन मनुना का स्मृति रचिता, तस्य स्त्रिया किन्नामासीत् कियन्तश्चासन् तस्य तनया? इत्यादि ज्ञान मन्वन्तर विना न भवितुमर्हति। पुराणानुसार सृष्टिकालादारभ्य प्रलयपयन्त प्राय चतुरर्बुदादधिक एव समयो व्यत्येति। एतावति महति समये का घटना कदाजीघटत? कस्य प्रादुर्भाव कदाजायतेत्यादि रहस्य ज्ञातु भगवता व्यासेन मन्वन्तरपद्धते राविष्कार कृत ।

## (५) वशानुचरितम्

वशानुचरित तेषा वृत्त वशधराश्च ये ॥ १२।१७।१६

विशिष्टवशेषु समुत्पन्नाना विशिष्टाना पुरुषाणा चरित्रवर्णन वशानुचरितमुच्यते। अत्र मृत्यलोकप्रभवाणा पुण्यकर्मशालिना ऋषीणा धर्म

रक्षणतत्पराणा राज्ञा च वशजा वर्ण्यन्ते, सृष्टिशृङ्खलाया. सदाचारादि विभागानाञ्च विस्तृत वृत्तान्तमुपलभ्यते ।

मनुष्याणा समक्षे यदा घोराद्घोरतरापि विपदुपतिष्ठते, तदा महतो महानपि धर्मवेत्ता किंकर्तव्यविमूढो भवति, मनसि च वहुविधो विचार उपतिष्ठते । तदेषदपि अनवधानतया पतन जायते । एवविधविकटपरिस्थितौ स्वपूर्वजाना चरित्र स्मृत्वा पतनादात्मनो रक्षणाय पुराणेषु वशानुचरितस्य समावेश कृतोऽस्ति ।

## सृष्टेः पौर्वापर्यविवेचनम्

इद दृश्य जगत् कै कै तत्वैर्निर्मित विद्यते ? एषां तत्वाना किमस्ति पौर्वापर्यम् ? सृष्टेरुत्पत्ति कदाऽभूत् कथमभूत् ? प्रलय कदा भविष्यति कथ च भविष्यति ? इत्यादीना रहस्यात्मकाना प्रश्नाना यथार्थमुत्तर विश्वस्य कस्मिन्नपि धमपुस्तके नोपलभ्यते । इतो लक्षवषपूर्वं किमासीत् ? कोटिवष पूर्वं किमासीत् ? अर्बुदवषपूर्वं च किमासीत् इत्यादिप्रश्नाना सन्तोषजनक वास्तविकमुत्तरमुपलब्धु पुराणानामेव पारायण कर्तव्य भविष्यति ।

ससारसृष्टे' कियन्ति वर्षाणि जातानीति प्रश्नस्योत्तर पुराणानामाधारे एव दातु शक्यते । यतोहि हिन्दुजाति सृष्टेरारम्भकालाद् अद्यावधि प्रत्यह नित्यनैमित्तिककाम्यादीना कर्मणामनुष्ठानसमये—ब्रह्मणो द्वितीयपरार्द्धे श्रीश्वेत वाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथम चरणे अमुक कम करिष्ये इत्यादि सकल्प पठित्वा सृष्टिगणना कुर्वन्ती सम्यक तद्विभागं च जानन्ती समय यापयति ।

एतस्यायमभिप्रायोऽस्ति यद् ब्रह्मण आयुष पञ्चाशद् वर्षानन्तर द्वितीय परार्द्धसमये श्रीश्वेतवाराहकल्पे वैवश्वतनाम्न सप्तमस्य मनो समये अष्टा विंशतिमस्य कलियुगस्य प्रथम भागे अमुक कम करिष्ये इति ।

## कालपरिमाणविवरणम्

कालपरिमाणविवरण हि पुराणेषु प्रचुरमात्रायामुपलभ्यते । तथाहि—

( विष्णुपुराणस्य प्रथमेंशे )

काष्ठा पञ्चदशाख्याता निमेषा मुनिसत्तम ।
काष्ठास्त्रिंशत्कला त्रिंशत्कला मौहूर्तिको विधि ॥
तावत्सख्यैरहोरात्र मुहूर्तैर्मानुष स्मृतम् ।
अहोरात्राणि तावन्ति मास पक्षद्वयात्मक ॥
तै षड्भिरयन वष द्वेऽयने दक्षिणोत्तरे ।
अयन दक्षिण रात्रिर्देवानामुत्तर दिनम् ॥
चतुर्युग द्वादशभिस्तद्विभाग निबोध मे ।

दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसञ्ज्ञितम् ॥
प्रोच्यते तत्सहस्र च ब्रह्मणो दिवस मुने !
ब्रह्मणो दिवसे ब्रह्मन् ! मनवस्तु चतुदश ॥
ब्राह्मो नैमित्तिको नाम तस्यान्ते प्रतिसचर ।

अर्थात् १५ निमेषाणामेका काष्ठा भवति, ३० काष्ठानामेका कला भवति, कलानामेका घटी भवति, द्वयो घटयोरेक मुहूत भवति, ३० मुहूर्तैरेकमहोरात्र भवति, ३० अहोरात्रै द्वौ पक्षौ भवत, द्वयो पक्षयोरेको मासो भवति, ६ मासानामेकमयन भवति, २ अयनयोरेक मानववर्ष भवति, १ मानववर्ष देवानामेक दिन भवति। एव दिव्याना द्वादशसहस्रवर्षाणामेक चतुर्युग भवति। सहस्राणा महायुगाना ब्रह्मण एक दिन भवति, यत्र १४ मनवो भवन्ति। ब्रह्मणो दिवसावसाने प्रलयो भवति, स एव ब्रह्मणो रात्रिरभिधीयते। इत्थ शतवार्षिक ब्रह्मण आयुर्भवति तत्परमुच्यते, तदध च परार्द्ध कथ्यते।

निजेन तस्य मानेन आयु वर्षशत स्मृतम्।
तत्पराख्य तदर्धं च परार्द्धमभिधीयते॥

पुराणेषु कालनिर्णयानुसार सत्ययुगस्य १७२८००० वर्षात्मकम् त्रेतायुगस्य १२९६००० वर्षात्मकम्, द्वापरयुगस्य ८६४००० वर्षात्मकम्, कलियुगस्य च ४३२००० वर्षात्मक मान विद्यते। सकलनया सर्वेषा मान ४३२०००० मानववर्षात्मक भवति। चतुर्णां युगाना सज्ञा महायुगमुच्यते। एकसप्तति ७१ महायुगानामेक मन्वन्तर भवति। चतुदशाना मन्वन्तराणामेक कल्प कथ्यते। एक कल्पो ब्रह्मण एक दिन भवति।

एकस्मिन् कल्पे ४२९४०८०००० वर्षाणि भवन्ति। तत्र वर्तमाने श्रीश्वेतवाराहकल्पे आरम्भत २०३६ विक्रमाब्दपयन्त मानववर्षेषु १९६४८ ५५०९३ वर्षाणि व्यतीतानि। २३२९२२४९०७ वर्षाणि चावशिष्टानि सन्ति।

| | |
|---|---|
| सत्ययुगमानम् | १७२८००० |
| त्रेतायुगमानम् | १२९६००० |
| द्वापरयुगमानम् | ८६४००० |
| कलियुगमानम् | ४३२००० |
| चतुर्युगमानम् | ४३२०००० |
| | ७१ |
| मन्वन्तरमानम् | ३०६७२०००० |
| | १४ |
| कल्पमानम् | ४२९४०८०००० |
| तत्र भुक्तकल्पमानम् | १९६४८५५०९३ |
| भोग्यकल्पमानम् | २३२९२२४९०७ |

एतदतिरिक्तम्प्रतियुग सध्यासध्याशकालमानमपि भवति।

सृष्टेरारम्भविषये यत्र वतमानविज्ञानमिदानी यावत् पञ्चसहस्राब्दारभ्य त्रिशत्कोटिपयन्त गत विद्यते। तत्र पौराणिकीसृष्टि प्राय अर्वुदद्वयवर्षमनुगच्छति। यदि आधुनिक विज्ञान शनै शनै उन्नति कुर्वाण तिष्ठेत्, तर्हि मन्ये कियद्वर्षानन्तर पौराणिक सिद्धान्तमुपगच्छेदिति।

पुरुषानुगृहीतानामेतेषा वासनामय।
विसर्गोऽय समाहारो वीजाद् वीज चराचरम्॥ १२।७।

यथा वर्षर्तौ पृथिव्यामज्ञातरूपेण स्थितानि बीजानि बहुविधलतागुल्म तृणादिरूपेण स्वय प्रादुर्भवन्ति, तथैव वतमानसृष्टे पूर्वसृष्टौ समुत्पन्नाना जीवाना अवशिष्टवासनामयै सस्कारै पुन सृष्टिरचना समये अनेके पदार्था तद्भोक्तारो जीवाश्च समुत्पद्यन्ते।

श्रीमद्भागवतस्य तृतीये स्कन्धे प्राकृतवैकृतभेदेन सृष्टे नव भेदा तेषा पौर्वापर्यक्रमश्चैवमुक्ता सन्ति—

गुणव्यतिकराकारोऽनिर्विशेषोऽप्रतिष्ठित।
पुरुषस्तदुपादानमात्मान लीलयासृजत्॥
विश्व वै ब्रह्मतन्मात्र सस्थित विष्णुमायया।
ईश्वरेण परिच्छिन्न कालेनाव्यक्तमूर्तिना॥
यथेदानी तथाग्रे च पश्चादप्येतदीदृशम्।
सर्गो नवविधस्तस्य प्राकृतो वैकृतस्तु य॥
आद्यस्तु महत सर्गो गुणवैषम्यमात्मन,।
द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदय॥
भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान्।
चतुर्थ ऐन्द्रिय सर्गो यस्तु ज्ञानक्रियात्मक।
वैकारिको देवसग पञ्चमो यन्मय मन॥
षष्ठस्तु तमस सर्गो यस्त्वबुद्धिकृत प्रभो।
षडिमे प्राकृता सर्गा वैकृतानपि मे शृणु॥
सप्तमो मुख्यसर्गस्तु षडविधस्तस्थुषा चय।
वनस्पत्योषधिलतास्त्वक्सारवीरुधो द्रुमा॥
उत्स्रोतस तम प्राया अन्त स्पर्शा विशेषिण।
तिरश्चामष्टम सर्ग सोऽष्टाविंशतिधो मत॥
अविदो भूरितमसो घ्राणज्ञा हृद्यवेदिन।
गौरजो महिष कृष्ण सूकरा गवयो रुरु॥
द्विशफा पशवश्चेमे अविरुष्ट्रश्च सत्तम।
खरोऽश्वोऽश्वतरो गौर शरभश्चमरी तथा॥

एते चैकशफा क्षत्त ! शृणु पञ्चनखान् पशून् ।
श्वा शृगालो वृको व्याघ्रो मार्जार शशशल्लकौ ॥
सिह कपिर्गज कूर्मो गोधा च मकरादय ।
कङ्क-गृध्र वट-श्येन भास भल्लूक बर्हिण ॥
हस सारसचक्राह्व काकोलूकादय खगा ।
अर्वाक् स्रोतस्तु नवम क्षत्तरेकविधो नृणाम् ॥
रजोऽधिका कर्मपरा दु खे च सुखमानिन ।

आकाशत पृथ्वीपर्यन्त स्थूलभूतानामुत्पत्तिप्रकारोऽपि तत्रैव—

नभसोऽनुसृत स्पर्शो विकुर्वन्निर्ममेऽनिलम् ।
अनिलो हि विकुर्वाणो नभसोरुबलान्वित ॥
ससर्ज रूपतन्मात्र ज्योतिर्लोकस्य लोचनम् ।
अनिलेनान्वित ज्योतिर्विकुर्वत्परवीक्षितम् ॥
आधत्ताम्भो रसमय कालमायाशयोगत ।
ज्योतिषाम्भोऽनुससृष्ट विकुर्वद् ब्रह्मवीक्षितम् ॥
मही गन्धगुणामाधात् कालमायाशयोगत ।

(श्रीमद्भागवतम् ३।५ ३२ ३५)

आधुनिकैर्विज्ञानविद्भिरेकस्वरेण स्वीकृतमस्ति यत् सृष्टिनिर्माणे कोटिवर्षेभ्य न्यूनतम समयो न व्यतीत । यत आरम्भे इय दाहकमग्निपिण्डमासीत्ततोऽत्र तृणगुल्मादय प्रादुर्भूता तत कियद्वर्षं यावत् जगलरूपे स्थिता आसीत्, ततो जीवाना निवासयोग्या जाता ।

पाश्चात्यवैज्ञानिकेषु प्रधानेन वैज्ञानिकेन लिचाफमहोदयेन स्वकीये "सेक्रेट् आफ् डाक्ट्रिन्" नामके पुस्तके लिखितमस्ति यत् पृथ्व्या द्विसहस्र डिग्रीतापमानत द्विशतडिग्रीतापमान यावत् गमने ३५ कोटिवर्षेभ्यो न्यून समयो न व्ययीभवितुमर्हति । एतेन—

शत मन्वन्तर यावज्ज्वलन्ती ब्रह्मतेजसा ।
सुषाव डिम्भ स्वर्णाभ विश्वाधारालयपदम् ॥

इति देवीभागवतपुराणोक्तसिद्धान्त एव सिध्यति ।

एतादृश एव सृष्टिक्रमो मनुस्मृते प्रथमाध्याये भगवता मनुनापि प्रदर्शितोऽस्ति । तस्मात् पौराणिकसृष्टिप्रक्रियाक्रमो वैज्ञानिकनिकषाया निमल प्रतीयते ।

# सृष्टिरहस्यम्

पुराणेषु सृष्टिप्रकरणमतिगहन विद्यते। सर्गाविर्भावरहस्यज्ञानान्तरमेव दृश्यरहस्यज्ञान भवितुमर्हति। सृष्टिस्तावच्चतुर्विधा भवति-प्राकृतिकी सृष्टि, ब्राह्मीसृष्टि, मानससृष्टि, मैथुनीसृष्टिश्च। तत्र सर्वप्रथम ब्रह्मप्रकृतौ अव्यक्ताव स्थातो व्यक्तावस्थामधिगताया सृष्टया अनन्तकोटिब्रह्माण्डव्यापकस्य ब्रह्मण ईक्षणातो या सृष्टि प्रादुर्भवति, सा प्राकृतिकी प्रथमा सृष्टि कथ्यते। यतो हि सा प्रकृत्या स्वभावेनैव भवति। तदनन्तर ब्रह्मविष्णुमहेशात्मकस्य मूर्तित्रयस्या विर्भावो भवति। इमे त्रय एव प्रतिब्रह्माण्ड सगुणब्रह्मण प्रतिनिधय ईश्वरा उच्यन्ते। तत्र ब्रह्मण सकाशात् द्वितीया ब्राह्मी सृष्टिरुत्पद्यते। ततो ब्रह्मणो मानसपुत्रै प्रजापतिभिर्देवदानवमानवादीना विस्तीर्णा तृतीया मानसी सृष्टि रुच्यते। तदनन्तर उद्भिज्जस्वेदजाण्डजजरायुजमानवेषु स्त्रीपुरुषसयोगजन्या चतुर्थी मैथुनी सृष्टि उत्पद्यते, सा वैजी सृष्टिरुच्यते। तत्र ब्राह्म्या मानस्याश्च सृष्टेरहस्य अन्तद्दृष्टयो योगिन एवानुभवन्ति न साधारणा जना तद्रहस्यमव गन्तु पारयन्ति। ब्राह्म्या मानस्याञ्च सृष्टावेव वेदाविर्भाव पुराणप्राकटय च भवति। अतो वेदाना पुराणानाञ्च वास्तविक रहस्य न साधारणबुद्धिगम्य भवति।

पुराणेषु विवेचिता सृष्टिपद्धतिर्न दार्शनिकपरिपाटीमनुरुन्धे। किन्तु विविधाना सृष्टिस्तराणा प्रसङ्गेन एकत्रैव पुराणेषु वर्णन क्रियते, येन विवेचन-शैली अतिजटिलतामासाद्य साधारणबुद्धीना मानवानामसबद्धवत् प्रतीयते।

सत्वगुणाधिदेवो भगवान् विष्णुर्यदा योगनिद्रानिगूढनयनो भवति, तदा रजोगुणाधिदेवो ब्रह्मा तदीयनाभिकमलतो जागृतो भूत्वा प्रादुर्भवति, ततश्च तमोगुणाधिदेवो भगवान् महेशस्तयोरेव देहयोरलक्षितरूपेण निगूढस्तिष्ठति। अस्यामेव दशाया ब्रह्मदेव सृष्टिचक्र चालयति, विस्तारयति च। पूर्वकल्पानु सार नवीने कल्पे योगयुक्तान्त करणेन ब्रह्मणा "धाता यथापूर्वमकल्पयत्" इति ऋग्वेदानुसार मानसी सृष्टि क्रियते तदैव भगवतो ब्रह्मणोऽन्त करणत ऋषीणा अन्त करणे आनन्दानुगतसमाधिद्वारैव वेदानामाविर्भावो भवति। विचारानु-गतसमाधिद्वारा च पूर्वकल्पीयगाथाना भावरूपेण पुराणात्मना प्राकटयमपि विज्ञानसिद्धमेव। तत्र वेदा यथावच्छब्दद्वारा पुराणानि च भावद्वारैवाऽविर्भाव-मासादयन्तीति सवसिद्ध पन्था।

मानवपिण्डेषु देवासुरराक्षसात्मिका त्रिविधा, सृष्टय दृष्टिगोचरी भवन्ति। तत्रैतावान् भेदो विद्यते यत् असुरलोकेषु आसुरीसृष्टेराधिक्य देवलोकेषु च देवीसृष्टि बाहुल्येनोपलभ्यते, किन्तु मृत्युलोक त्रिविधा सष्टयो दृष्टिगोचरता-मुपयान्ति। तत्र पूवकालिककर्मानुसारेण कदाचिद् दैव्या प्रजाया कदाचन आसुर्या कदाचिच्च राक्षस्या प्रजाया आधिक्य जायते।

**तपसो महत्त्वम्**

स्वर्गे पाताले मृत्युलोके च निवासिभिर्जीवै अलौकिकीशक्तिरैश्वर्यञ्च दुष्करेण तपसा ससाध्यते। तपो हि जीवेषु अलौकिकी शक्ति सञ्चारयति। ससारे नैवविध किञ्चित्कार्यं वर्तते, यत्तपसा न सिध्येत। तपसा हि साधकोऽसभवमपि कार्यं सभव कर्तुमर्हति। तथाचाह भगवान् मनु।

यद्दुष्कर यद्दुराप यद्दुर्गं यच्च दुस्तरम्।
तत्सर्वं तपसा साध्य तपो हि दुरतिक्रमम्॥

अत एव मानवेषु देवेषु असुरेषु च तपसि प्रवृत्ति स्वाभाविकी भवति। तपोऽनुष्ठानाय इमामेव कर्मभूमिमाश्रयन्ति सर्वे। किं बहुना ? तपोबलेनैव ब्रह्मा ससार सृजति, विष्णु पालयति, शिवश्चान्ते सहरति। अतएव ब्रह्मसृष्टौ वैविध्य विद्यते। ब्रह्मसमाना अनेके महर्षयोऽपि सन्ति, ये मानसी सृष्टिकर्तुं प्रभवन्ति। अत एव महर्षे कश्यपात् मनोश्च देवतापशुपक्षिस्थावरजङ्गमाना सृष्टिरुद्भवति।

ब्रह्मणो मानसीसृष्टि श्रीमद्भागवते यथा—

भगवद्ध्यानपूतेन मनसाऽन्यांस्तदाऽसृजत्।
सनकञ्च सनन्दञ्च सनातनमथात्मभू॥
सनत्कुमार च मुनीन् निष्क्रियानूर्ध्वरेतस।
तान् बभासे स्वभू पुत्रान् प्रजा: सृजत पुत्रका॥
तेनैच्छत् मोक्षधर्माणो वासुदेवपरायणा।

किञ्च—

अथाभिध्यायत सर्गं दशपुत्रा: प्रजज्ञिरे।
भगवच्छक्तियुक्तस्य लोकसन्तानहेतवे॥
मरीचिरत्र्यङ्गिरसौ पुलस्त्य पुलह क्रतु।
भृगुवसिष्ठो दक्षश्च दशमस्तत्र नारदः॥
उत्सङ्गान्नारदो जज्ञे दक्षोऽङ्गुष्ठात्स्वयभुव।
प्राणात् वसिष्ठ सजातो भृगुस्त्वचि करात्क्रतु॥
पुलहो नाभितो जज्ञे पुलस्त्य कर्णयोर्ऋषि।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिमनसोऽभवत्॥

अपि च—एते मनू स्तु सप्तान्यानसृजन् भूरितेजस।
देवान् देवनिकायाश्च महर्षींश्चामितौजस॥
पञ्चधावस्थित सर्वो ध्यायतोऽप्रतिबोधवान्।
वहिरन्तो प्रकाशश्च सवृतात्मा नगात्मक॥
मुख्या नगा यतश्चोक्ता मुख्यसर्गस्ततस्त्वयम्।
त दृष्ट्वाऽसाधक सर्गममन्यदपर पुन:॥

तस्याभिध्यायत सर्गं तिर्यक् श्रोताभ्यवर्तत ।
तमप्यसाधक मत्वा ध्यायतोऽन्यस्ततोऽभवत् ॥
ऊर्ध्वस्रोतास्तृतीयस्तु सात्विकोद्ध्वमवर्तत ।
ततोऽन्य शतधा दध्यौ साधक सगमुत्तमम् ॥
असाधकास्तु तान् ज्ञात्वा मुख्यसर्गादिसभवान् ।
तथाभिध्यायतस्तस्य सत्याभिध्यायिनस्तत ॥
प्रादुबभूव चाव्यक्तादर्वाक् स्रोतसस्तु ते ।
ते च प्रकाशबहुलास्तमोद्रिक्ता रजोऽधिका ॥
तस्मात्ते दु खबहुला भूयोभूयश्च कारिण ।
प्रकाशा बहिरन्तश्च मनुष्या साधकाश्च ते ॥

विष्णुपुराणे १ अशे ३ अध्याये च—

ततोऽभिध्यायतस्तस्य जज्ञिरे मनसा प्रजा ।
तच्छरीरसमुत्पन्नै कार्यैस्तै करणै सह ॥
यदास्य ता प्रजा सर्वा न व्यवर्धन्त धीमत ।
यथास्य मानसान् पुत्रान् सदृशानात्मनोऽसृजत् ।
भृगु पुलस्त्य पुलह क्रतुमङ्गिरस तथा ।
मरीचि दक्षमत्रि च वसिष्ठ चैव मानसान् ॥

न केवल पुराणेष्वेव, किन्तु वेदेऽपि मानस्या सृष्टे वर्णनमस्ति। तथा हि "मनसा साधु पश्यति, प्रजा असृजन्त" महाभारते च भगवान् महर्षिर्व्यास —

प्रजापतिरिद सर्वं मनसैवासृजत् प्रभु
तथैव देवानृषयस्तपसा प्रतिपेदिरे ॥
आदिदेवसमुद्भुता ब्रह्ममूलाक्षयाव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ।

तथा च सवसमर्थो ब्रह्मा प्रथम मनसा एव सृष्टि करोति या मानसी सृष्टि कथ्यते । तदनु महर्षयोऽपि तपस्यावलेन प्रथमं मानसीमेव सृष्टि कृतवन्त ।

प्रथम भगवतो ब्रह्मदेवस्येच्छया अमलात्मना सनकादीना परमहसाना सृष्टि एतादृशी पूर्णा समुत्पन्ना, यत्ते इच्छाविरहात् सृष्टिप्रवृत्तिविरहिता अभूवन् । ततो ब्रह्मणो द्वितीयया इच्छया प्रजापतय समुत्पन्ना , सेय सृष्टि प्रथमसृष्टितोऽवराऽस्ति । ते च मानससृष्टिकरणे प्रवृत्ता तत्र सफला समर्थाश्च जाता । ततो मानवपिण्डाना सृष्टि प्रारब्धा । तदानी सर्वे मनुष्यपिण्डधारणो जीवा विभिन्नरूपग्राहिण समानाधिकारसौन्दर्यशालिनो मानसमैथुनोभय सृष्टिकरणे दक्षा आस्तिका पूर्णावयवा पर्याप्तभोगा धर्मशीलाश्च भवन्तिस्म ।

अत प्रवाहानुगामिन शनै शनै मानसवलह्रासात् मानससृष्टिशक्तिविलोपोऽभूत् । केवल मैथुनसृष्टिरेवावशिष्टा । सृष्टे प्रवाह उत्तरोत्तर अधोमुखीनो भवति । परमकारुणिको भगवान् मनु मनुष्यसृष्टिमनुगृह्य दृढदार्शनिकमुक्तिबलेन वर्णाश्रमाणा सामाजिकश्रृङ्खला धर्मशास्त्रप्रणयनादिसोपानेन वृहद्भूता चकार। नो चेदनादौ प्रवाहे कियन्त धर्मच्युता आध्यात्मिकभावविरहिता कर्तव्याकतव्यज्ञानशून्या सन्तो विलय गता स्यु ।

विष्णुपुराणे सृष्टे बहव स्तरा वर्णिता सन्ति । एका अज्ञानयुक्ता प्रकाशहीना स्थावरसृष्टि, यत्र केवलस्य अन्नमयस्य कोषस्य विकाशो भवति। द्वितीया स्वेदजाण्डजजरायुजाना सृष्टि, यत्र प्राणमयमनोमयविज्ञानमयकोषाणा किञ्चिद्विकाशो भवति । तत्र ज्ञानस्य लक्ष्य नास्ति । तृतीया सृष्टिर्देवानामस्ति, ये भोगविलासादिषु एव प्रीति कुर्वन्ति । न ते किञ्चित्साधयन्ति, यतो हि ते भोगयोनय सन्ति। ततो मनुष्याणा चतुर्थी सृष्टि । मनुष्येषु पञ्चानामपि कोषाणा पूर्णो विकाशो जायते । अत ते साधका धर्मप्रवीणाश्च भवन्ति ।

योगवलेन मानसिकप्रेरणाद्वारा गर्भाधानपूर्वक सन्तानोत्पत्तिरपि श्रूयते, यथा भगवतो व्यासस्य दृष्टिपातमात्रेण धृतराष्ट्रस्य, पाण्डो, विदुरस्य चोत्पत्ति । स्त्रीपुरुषयो सयोग विनापि मानसिकशक्तिवलेन मनुष्योत्पत्तिरपि दृश्यते, यथा धर्मराजेन्द्रवाय्वादीना देवाना मानसिकप्रेरणया युधिष्ठिरभीमार्जुनादीनामुत्पत्ति, कालक्रमेण कलियुगे शनै शनै तप शक्ते ह्रासात् उपयुक्तानां सृष्टीना प्रवाहोऽवरुद्ध । केवल मैथुनी सृष्टिरेवावशिष्टा। यस्या विस्तार इदानीं प्रचलति ससारे।

शका—बहवो देशीया विद्वास समये समये सदिहन्ते यत् हिन्दूनामितिहासे न कुत्रापि जन्मसबद्धुल्लेखो विद्यते, नापि विशेषघटनाना समयो निर्दिष्टोऽस्ति। अतो भारतीयेतिहास अनुपयुक्तोऽन्धकारमयश्चाति ।

समीक्षा—द्विसहस्रवर्षमात्रे इतिहासे ईशामाध्यमेन जन्मतिथेरुल्लेखो भवितुमर्हति, किन्तु अतिविपुले चतुरबुदवषमिते इतिहासे ईशासमा अनेके उत्पन्ना अतोऽकिञ्चित्करीमिमा पद्धतिमनुपयुक्ता मत्वा त्रिकालदर्शिना महर्षिणा वेदव्यासेन समाधिना मन्वन्तरप्रणाली समाश्रिता। किञ्च ईशाविषयेऽप्यय निश्चयो नास्ति, यदय सृष्टे कियद्वर्षानन्तर जात ? तर्हि एतस्य माध्यमेन कालविभागस्य किं मूल्यमस्ति ? अपिच किम् ईसावषमेवमेव प्रलयपर्यन्त प्रचलिष्यति ? लक्षवर्षाणा वार्ता तु दूरे तिष्ठतु, पञ्चसहस्रवर्षपूर्वं प्रचलितो यौधिष्ठिर सम्वत्सरो न सर्वैरिदानी ज्ञायते, तर्हि ईशासम्वत्सर सदा चलिष्यत्येवेत्यत्र कोऽस्ति निश्चय ? सभाव्यते चाचिरमेव स्वतन्त्रे भारते कदाचिदीशासम्वत्सरस्स्थगित स्यात् । अतोऽस्माक पूर्वजै किञ्चिदनिश्चित-

मुपायममत्वा प्रत्येक सिद्धान्त सुनिश्चते सीम्नि समुपस्थापयन्ति । यथा घटिकाया द्वादशभि चिह्ने एकस्य दिनस्य २४ घटिकासमयज्ञानस्य व्यवस्था कृतास्ति तथैव पुराणेषु एकस्य कल्पस्य दीघसमयज्ञानाय १४ मन्वन्तरमाध्यमेन व्यवस्था कृतास्ति । अत सृष्टिकालत प्रलयपर्यन्त घटनाज्ञानाय मन्वन्तर पद्धतेराविष्कार सर्वथोपयोगी युक्तियुक्तश्चास्ति ।

यदि मन्वन्तरमानेन केवलमिदमेव ज्ञातु शक्यते यद् अमुकमन्वन्तरस्या मुकयुगे इय घटनाऽजीघटत तर्हि पाश्चत्यपद्धत्यापि केवलमिदमेव ज्ञायते यत् अमुकघटना इयद्वर्षपूर्वं पर वाऽजायत । पाश्चात्यपद्धतौ अपि मासतिथिघटना पलप्रतिपालाना तु ज्ञान भवत्येव नहि । यथा अल्पीयसि द्विसहस्रात्मके काले केवल वर्षज्ञानमेव पर्याप्त भवति तथैव चतुरबुदवर्षाणामितिहासे केवल मन्वन्तरमात्र युगज्ञान वा कथ न पर्याप्त स्यात् । तस्माद् यथा पाश्चात्यपद्धतौ तिथिघटीक्षणपलविपलादीना ज्ञानमन्तरापि न कापि हानिर्भवति, तथैव मन्वन्तरपद्धतावपि वषज्ञान विनापि न कापि क्षतिर्भवितुमर्हति । अतएवोक्त-मभियुक्तै —

यश्चोभयो समो दोष परिहारोऽपि तादृश ।
नैक पयनुयोक्तव्य तादृगर्थविचारणे ॥

द्विसहस्रायुष्मत्या पाश्चात्यजाते अबुदवर्षायुष्मत्या हिन्दुजातेश्च गणनाया मेतावदन्तर स्वाभाविकमस्ति । अतो यदि पाश्चात्यपद्धतौ केवल पर्याप्त वतते तर्हि अर्बुदवर्षात्मके हिन्दूनामितिहासे मन्वन्तरयुगज्ञानमेव पर्याप्त प्रतीयते—

पुराणेषु या गाथा यानि चरित्राणि याश्च ऐतिहासिकघटना वर्ण्यन्ते, तासा सर्वासा स्वरूप समाधियोगेन समाधिगम्यत्रिकालदर्शी महर्षि व्यासो लोककल्याणाय वर्णितवान् । पुराणेषु प्रतिपादिता देवपदाधिकारिणा देवाना च गाथा सृष्टिसम्बन्धेनास्माक परमोपयोगिनी वतते । दैवे जगति मनुपदमेक मत्यन्तमहत्वपूर्णं पदमास्ते, तत् खलु प्रतिमन्वन्तर परिवर्तते । मन्वन्तर नाम देवराज्ये नानापरिवर्तनकारक कालविशेषोऽस्ति, यथाऽस्मिन् मर्त्यलोके राज्ञा म्परिवर्तने अनेकविध परिवर्तनमुपजायते, तथैव प्रतिमन्वन्तर देवलोकमृत्यु लोकयो सभ्यतास्वरूप तच्छृङ्खलाविधानम्, तच्छासनपद्धतिश्चेनि सव परिवतते । यथास्मिन् लोके एकद्वित्रिचतु पञ्चशतवर्षेषु सभ्यतासदाचारादीना परिवर्तन दृश्यते, तथैव प्रतिमन्वन्तर मनो परिवर्तनेन साक देवराज इन्द्र अन्य महान्तो देवपदाधिकारिणो नित्यषय पितरश्च परिवर्तन्ते । तथाचोक्तम्—

सप्तर्षय सुरा शक्रो मनुस्तत्सूनवो नृपाः ।
एककाले हि सृज्यन्ते संह्रियन्ते च पूर्ववत् ॥

( विष्णुपुराणे १ अशे ३ अध्याय. )

अत प्रतिमन्वन्तर जीवाना शक्तौ, ज्ञाने, दैवजागतिकशृङ्खलादौ च महत् परिवर्तनमुपजायते । प्रतिमन्वन्तर देवा कर्मचालका, ऋषयो ज्ञान-सञ्चालका, पितरश्च स्थूलभूतसञ्चालका भवन्ति । तेषामधस्तादनेके लघीयासो देवपदाधिकारिणो भवन्ति, यथैकस्मिन् साम्राज्ये सम्राट् माण्डलिकादयश्च कार्यकारिणश्च पृथक् पृथक् भवन्ति, तथैव दैवराज्ये इन्द्रेण सह अनेकेषा देवपदाधिकारिणा सम्बन्धो भवति । प्रतिमन्वन्तर यदा दैवी शृङ्खला परिवतते, तदा सृष्टे बहवोऽशा, देवराजस्यानेका व्यवस्था अपि परिवर्तन प्राप्नुवन्ति । प्रतिमन्वन्तर यद् ज्ञानतारतम्यमुपलभ्यते, तत् तात्कालिकाना देवर्षिगणाना परिवर्तनमूलकमेवास्ति ।

मन्वन्तरीयभूगोलेतिहासवर्णनेन सह वर्तमानभूगोलेतिहासयो महत्पार्थक्यमस्ति । अत कल्पान्तरीयेण मन्वन्तरीयेण भूगोलेतिहासेन सह आधुनिक भूगोलेतिहासयो यदि सामञ्जस्य न स्यात् तर्हि न कापि हानिभवितुमर्हति । पुराणेतिहासेषु समुपवर्णिता विषया न लौकिकेतिहासरूपा सन्ति, किन्तु प्राधान्येन धर्मरहस्यप्रदर्शनप्रधाना सन्ति । पुराणेषु इतिहासवर्णनेन सह आध्यात्मिकाधिदैविकाधिभौतिकविषयवर्णनमस्ति । अत पुराणानि न लौकिके-तिहासरूपाणि भवितुमर्हन्ति ।

त्रिकालदर्शी महर्षिव्यास समाधिधिया मन्वन्तरीया कल्पान्तरीयाश्च गाथा सङ्कलय्य लोककल्याणहेतवे पुराणेषु प्रकाशयाञ्चकार । अतो नासा लौकिकैरितिहासै सर्वांशेन सम्बन्ध । किं बहुना यदा इदानीमपि शतवार्षिके सहस्राब्दिके वा काले लौकिकेतिहासे देशकालपात्राणा सभ्यताया सस्कृतेश्च महत् परिवर्तनमवलोक्यते, तदा अनेकमन्वन्तरीये कल्पान्तरीये च विपुले काले कियत् परिवर्तन भवितुमर्हतीति विद्वद्भि स्वयमेव विचारणीयम् ।

दैवराज्यस्य प्रधानतया त्रीणि कार्याणि सन्ति (१) कालव्यवस्था (२) कर्मशृङ्खला (३) पदाधिकारिणा सुव्यवस्था च । तत्र कालव्यवस्थापको राजा मनुरभिधीयते, कमफलदानेन सह जीवाना नियामको धमराजो विद्यते । अनेकविधाना देवपदाधिकारिणा प्रतिष्ठापको देवसत्वसुरक्षको देवराज इन्द्र उच्यते । जीवाना गमनागमनचक्रस्य नियामका अपरेऽपि अनेके देवा तत्तत् पदेषु प्रतिष्ठिता सन्ति ।

यथाऽस्मिन् मृत्युलोके राजा, प्रजा, राज्यशक्ति, प्रजाशक्ति, देशकाल पात्राणा स्वरूप च पृथक् पृथक प्राप्यते, तथैव प्रतिमन्वन्तर विभिन्नप्रकारको देवर्षिपितृसङ्घो जायते । तस्मात् प्रतिमन्वन्तर देवराजस्य देवपदानाञ्च शृङ्खलायामवश्य महान् भेदो भवितुमर्हति । मन्वन्तरपरिवृत्तौ मनुपदेऽन्यो मनुः प्रतिष्ठितो भवति । इमं कालपरिमाण निरीक्ष्य बुद्धिमन्तो विद्वास इदमव-

धारयन्ति यदेतस्मिन् महति काले बहु परिवर्तन भवति । पदार्थविद्यावेदिनस्त्विदमामनन्ति यत् द्विसहस्रवर्षानन्तर प्रस्तरगृहादीनामपि न कापि सत्ता स्थातुमर्हति। एतावता महता कालेन सर्वत्र वननदीप्रभृतिषु बहुविध परिवर्तन भवति।

ब्रह्मण एक दिन कल्प कथ्यते । एकस्मिन् कल्पे चतुर्दश मन्वन्तराणि सहस्रसख्याका महायुगाश्च भवन्ति। सत्य त्रेता द्वापर कलियुगानामेको महायुगो भवति। एको महायुगो देवाना द्वादशसहस्रवर्षाणा भवति। तत्र चतु सहस्र दिव्यवर्षाणा सत्ययुगं भवति । यथैकस्मिन् दिने प्रात सन्ध्याकाल साय सन्ध्याकालश्च भवति । तथैव प्रतियुग युगस्यारम्भे सन्ध्याकाल अन्ते च सन्ध्याशकालोपि भवति । तत्र चतु सहस्रदिव्यवर्षाणा सत्ययुगम्, चतु शतानि वर्षाणि सन्ध्या, सध्याशश्चास्ति । त्रिसहस्रदिव्यवर्षाणा त्रेतायुगम्, शतत्रयवर्षाणा सध्या सध्याशश्च । द्विसहस्रवर्षाणा द्वापरयुगम्, द्विशतवर्षाणा सध्या सध्याशश्च भवति। एवमेकसहस्रदिव्यवर्षात्मक कलियुगम्, शतवर्षात्मिका सध्या शतवर्षात्मक सध्याशश्च भवति । एव सङ्कलनया द्वादशसहस्रवर्षाणाम् एक चतुयुग भवति। तथा चोक्तम् मार्कण्डेयपुराणे ४६ अध्याये—

दिव्यैवषसहस्रैस्तु कृतत्रेतादिसज्ञितम् ।
चतुर्युग द्वादशभि तद्विभाग श्रृणुष्व मे ॥
चत्वारि तु सहस्राणि वर्षाणा कृतमुच्यते ।
शतानि सध्या चत्वारि सध्याशश्च तथाविध ॥
त्रेता त्रीणि सहस्राणि दिव्याब्दाना शतत्रयम् ।
तत्सध्या तत्समा चैव सध्याशश्च तथाविध ॥
द्वापर द्वे सहस्रे तु वर्षाणा द्वे शते तथा ।
तस्य सध्या समाख्याता द्वे शताब्दे तदशक ॥
कलि सहस्रम्दिव्यानामब्दाना द्विजसत्तम ! ॥
सध्या सध्याशकश्चैव शतकौ समुदाहृतौ ।
एषा द्वादशसाहस्री युगाख्या कविभि कृता ॥
एतत् सहस्रगुणितम् अहर्ब्राह्ममुदाहृतम् ।
ब्रह्मणो दिवसे ब्रह्मन् मनव स्युश्चतुर्दश ।
भवन्ति भागशस्तेषा सहस्रम् तद्विभज्यते ॥

विष्णुपुराणस्य प्रथमेऽशे तृतीयेऽध्याये च—

दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसज्ञितम् ।
चतुर्युग द्वादशभिस्तद्विभाग निबोध मे ॥
चत्वारि त्रीणि द्वे चैक कृतादिषु यथाक्रमम् ।

दिव्याब्दाना सहस्राणि युगेष्वाहु पुराविद ॥
तत्प्रमाणै शतै सध्या पूर्वा तत्राभिधीयते ।
सध्याशश्चैव तत्तुल्यो युगस्यानन्तरो हि स ॥
सध्या सध्याशयोरन्तर्यं कालो मुनिसत्तम ! ।
युगाख्य स तु विज्ञेय कृतत्रेतादिसज्ञित ॥
कृत त्रेता द्वापरश्च कलिश्चैव चतुर्युगम् ।
प्रोच्यते तत्सहस्रञ्च ब्रह्मणो दिवस मुने ! ॥
ब्रह्मणो दिवसे ब्रह्मन् ! मनवस्तु चतुर्दश ।
भवन्ति परिमाण च तेषा कालकृत शृणु ॥

**दिव्यवर्षविवरणम्—**

| | काल | सध्या | सध्याश | योग |
|---|---|---|---|---|
| सत्ययुगस्य | ४००० | ४०० | ४०० | ४८०० |
| त्रेतायुगस्य | ३००० | ३०० | ३०० | ३६०० |
| द्वापरयुगस्य | १००० | २०० | २०० | २४०० |
| कलियुगस्य | १००० | १०० | १०० | १२०० |
| सङ्कलनम् | | | | १२००० |

मनुष्याणाम् एक वर्षं देवानामेक दिन भवति। एव मानवीय ३६० वर्षाणा देवानामेक वर्षं भवति। तच्च दिव्य वर्षं कथ्यते। द्वादशसहस्रदिव्य-वर्षात्मके काले दशसहस्रै गुणन कृत्वा पुन ३६० गुणनेन मनुष्यवर्षाणि सिद्ध्यन्ति । तथाहि एकस्मिन् कल्पे—१२००० × १००० = १२००००० देव वर्षाणि १२००००० × ३६० = ४३२००००००० मनुष्यवर्षाणि भवन्ति ।

श्रीमद्भागवते तृतीयस्कन्धस्यैकादशेऽध्यायेऽपि—

कृत त्रेता द्वापर च कलिश्चेति चतुर्युगम् ।
दिव्यै द्वादशभिर्वर्षै सावधान निरूपितम् ॥ १८
चत्वारि त्रीणि द्वे चैक कृतादिषु यथाक्रमम् ।
सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च ॥
सन्ध्याशयोरन्तरेण य. काल शतसङ्ख्ययो ।
तमेवाहुर्युग तज्ज्ञा यत्र धर्मो विधीयते ॥
त्रिलोक्या युगसाहस्र बहिराब्रह्मणो दिनम् ।
तावत्येव निशा तात ! यन्निमीलति विश्वसृक् ॥
निशावसान आरब्धो लोककल्पोऽनुवर्तते ।
यावद्दिन भगवतो मनून्भुञ्जश्चतुर्दश ॥
स्वं स्वं कालं मनुर्भुङ्क्ते साधिका ह्येकसप्ततिम् ।

त्रिंशत्कोट्यस्तु सम्पूर्णाः सङ्ख्याता सङ्ख्यया द्विज !
सप्तषष्टिस्तथान्यानि नियुतानि महामुने ! ॥
विंशतिस्तु सहस्राणि कालोऽयमधिकं विना ।
मन्वन्तरस्य सङ्ख्येयं मानुषैर्वत्सरैर्द्विज ! ॥

इति विष्णुपुराणप्रवचनानुसारं प्रत्येकमन्वन्तरकालः मानवीय-३०६७२०००० वर्षात्मको भवति । तत्र वैक्रमीयसंवत् २०३६ पर्यन्तं वर्तमानस्य सप्तमस्य वैवस्वतनाम्नो मन्वन्तरस्य १२०५३३०८० वर्षाणि व्यतीतानि, १८६१८६९२० वर्षाणि चावशिष्टानि सन्ति ।



# चतुर्दशानां मनूनां नामानि

मन्वन्तरवर्णनं प्रायः सर्वेषु पुराणेषु विद्यते । तत्र विष्णुपुराणे १ अंशे ३ अध्याये १४ मनूनां नामानि एवं निर्दिष्टानि सन्ति–(१) स्वायम्भुवमनुः (२) स्वारोचिषमनुः (३) उत्तममनुः (४) तामसमनुः (५) रैवतमनुः (६) चाक्षुषमनुः (७) वैवस्वतमनुः (८) सावर्णिकमनुः (९) दक्षसावर्णिकमनुः (१०) ब्रह्मसावर्णिकमनुः (११) धर्मसावर्णिकमनुः (१२) रुद्रसावर्णिकमनुः (१३) रुचिर्मनुः (१४) भौममनुः । तथाहि—

स्वायंभुवो मनुः पूर्वं परः स्वारोचिषस्तथा ।
उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥
षडेते मनवोऽतीताः साम्प्रतं तु रवेः सुतः ।
वैवस्वतोऽयं यस्यैतत्सप्तमं वर्ततेऽन्तरम् ॥
सावर्णिस्तु मनुर्योऽसौ मैत्रेय ! भविताष्टमः ।
नवमो दक्षसावर्णिर्भविष्यति मुने ! मनुः ।
दशमो ब्रह्मसावर्णिर्भविष्यति मनुः मुने ! ।
एकादशस्तु भविता धर्मसावर्णिको मनुः ॥
रुद्रपुत्रस्तु सावर्णिर्भविता द्वादशो ! मनुः ।
त्रयोदशो रुचिर्नाम भविष्यति मुने ! मनुः ।
भौमश्चतुर्दशश्चात्र मैत्रेय ! भविता मनुः ॥

एष मृत्युलोको हि उपरिवर्तमानानां सप्तलोकानामन्यतमस्य भूलोकस्य चतुर्थो भागः । अत्रत्या जीवा मातृगर्भादुत्पद्यन्ते मृत्युमपि प्राप्नुवन्तीति हेतोः अयं मृत्युलोक इति उच्यते । किञ्च मृत्युलोकप्रभवा प्राणिनः स्वकीयकर्मपरवशाः सन्तो मृत्योरनन्तरं आतिवाहिकेन शरीरेण देव-

साहाय्यमवाप्य देवलोकेषु गच्छन्ति। तत्र स्वस्वकर्मानुसार केचन स्वर्ग लोके विविध स्वर्गीयसुखमुपभुञ्जते । केचिच्च नरकलोके पापकर्मपरिणाम-मनेकप्रकार दुस्सह दु खमनुभवन्ति। मृत्युलोकादपरे त्रयो लोका देवलोका कथ्यन्ते । तेषु देवपिण्डधारिणो देवा निवसन्ति, मानवपिण्डधारिणो मनुष्या तान् द्रष्टु न प्रभवन्ति । यदि तेषामनुग्रहो भवेत्, तदा द्रष्टु शक्नुवन्ति। देवलोका अस्माक मानवलोकादतीता सूक्ष्माश्च सन्ति । तत्र यथा देवा देवपिण्डानि बिभ्रति, तथैवासुरा अपि देवपिण्ड दधति । तत्र विशेषस्तु एतावानेव वर्तते यद् आत्मोन्मुखवृत्तिप्रधाना देवा इन्द्रियोन्मुखवृत्तिमुख्या असुराश्च भवन्ति। अतएव समये उभयो समये देवलोके प्रायो देवासुरसङ्ग्रामो भवति।

तत्रोन्नतिकारिणो देवा न कदाचिदसुराणामधिकारमपहर्तुमिच्छन्ति, स्वाधिकारे एव ते सन्तुष्यन्ति, किन्तु विषयलोलुपा असुरा सर्वदैव देवाधिकारमात्मसात् कर्तु यतन्ते। एतदेव देवासुरसङ्ग्रामस्य मूलङ्कारणमस्ति। यदा देवासुरसङ्ग्रामेऽसुराणा विजयो जायते, पराजीयन्ते च देवा, तदाऽघटितघटनापटीयस्या ब्रह्मशक्ते महामायाया अनुकम्पया असुराणा पराजयेन देवराज्ये पुन शान्तिरायाति।

भूलोकस्य चत्वारो भेदा सन्ति। एक पितृलोक, यत्र धर्मराजापरनामधेयस्य यमस्य राजधानी, संयमिनी वर्तते। द्वितीयो नरकलोक, यत्राशुभकर्मकारिणो जीवा फलभोगाय गच्छन्ति। तृतीय प्रेतलोक, यत्र मरणानन्तर प्रेतभूता जीवा कियत्काल तिष्ठन्ति। चतुर्थश्चाय मृत्युलोक, यत्र वय वसाम । अस्मिन् मृत्युलोके एव मातृगर्भाज्जीवा जायन्ते, अन्यलोकेषु अयोनिजा एव जीवा उपलभ्यन्ते। अस्य मृत्युलोकस्य गमनागमनकेन्द्रस्थानत्वाज् जीवा पितृप्रेतनरकात्मके लोकत्रये स्वस्वशुभाशुभकर्मफलभोगाय बम्भ्रम्यमाणा पुन मृत्युलोके एव जन्म लभन्ते।

२०३६ वैक्रमीयसम्वत्सरपर्यन्त ५०८० वर्षाणि व्यतीतानि, शेषाणि च ४३१४९१९ वर्षाणि सन्ति। अतोऽस्मिन् कल्पे ४३ चतुर्युगानि ७ मन्वन्तराणि ८ सन्धय अवशिष्टानि सन्ति। तथा च तद्विवरणम्—

| | |
|---|---|
| वर्तमानकले भुक्तवर्षाणि | ५०८१ |
| वर्तमानकले भोग्यवर्षाणि | ४३१४९१९ |
| शेष ४३ चतुर्युगाना भोग्यवर्षाणि | १८५७६०००० |
| भोग्यसन्ध्या सन्ध्याशवर्षाणि | १३८२४००० |
| भोग्यसप्तमनुवर्षाणि | २१४७०४००० |
| ०५।१। | २३४७०५०६६८ |

एवञ्च १०३६ सम्बत्सरत २३४७०५०९६८ वर्षानन्तरमस्य ब्रह्माण्डस्य प्रलयो भविष्यति।

**प्रलयश्चतुर्विधः**

विष्णुपुराणस्य प्रथमेऽशे सप्तमेऽध्याये नित्यनैमित्तिकप्राकृतात्यन्तिकभेदात् चतुर्विध प्रलय उक्तोऽस्ति। तथाहि—

नैमित्तिक प्राकृतिकस्तथैवात्यन्तिको द्विज!
नित्यश्च सर्वभूताना प्रलयोऽय चतुर्विध॥
ब्राह्मो नैमित्तिकस्तत्र शेतेऽय जगतीपति।
प्रयाति प्राकृते चैव ब्रह्माण्ड प्रकृतौ लयम्॥
ज्ञानादात्यन्तिक प्रोक्तो योगिन परमात्मनि।
नित्य सदैवभूताना यो विनाशो दिवानिशम्॥

तत्रैव ६ अशे ३ अध्याये सर्वेषा प्राणिना प्रलयस्तु त्रिविध उक्त। तथाहि—

सर्वेषामेव भूताना त्रिविध प्रतिसञ्चर।
नैमितिक प्राकृतिकस्तथैवात्यन्तिको लय॥
ब्राह्मो नैमितिकस्तेषा कल्पान्ते प्रतिसञ्चर।
आत्यन्तिकस्तु मोक्षाख्य प्राकृतो द्विपरार्द्धक॥

तत्र श्रीमद्भागवतस्य १२ स्कन्धे ४ अध्याये प्राकृतप्रलयो यथा—

द्विपरार्धे त्वतिक्रान्ते ब्रह्मण परमेष्ठिन।
तदा प्रकृतय सप्त कल्पान्ते प्रलयाय वै॥
एष प्राकृतिको राजन्! प्रलयो यत्र लीयते।
अण्डकोशस्तु सघातो विघात उपसाधिते॥
पर्जन्य शतवर्षाणि भूमौ राजन्न! वर्षति।
क्षय यास्यन्ति शनकै कालेनोपद्रिता प्रजा॥
सामुद्र दैहिक भौम रस सावर्तको रवि।
रश्मिभि पिवते घोरै सर्व नैव विमुञ्चति॥
तत सवर्तको वह्नि सकर्षणमुखोत्थित।
दहत्यनिलवेगोत्थ शून्यान् भूविवरानथ॥
उपर्यध समन्ताच्च शिखाभिर्वह्निसूर्ययो।
दह्यमान विभात्यण्ड दग्धगोमयपिण्डवत्॥
तत प्रचण्डपवनो वर्षाणामधिक शतम्।
शतवर्षाणि वर्षन्ति नदन्ति रभसस्वनै॥
तत एकोदर्क विश्व ब्रह्माण्डविवरान्तरम्।

अर्थात्—ब्रह्मण आयुष समाप्तौ प्राकृत प्रलय प्रारभते। तत्र प्रथमं शतवर्षाणि यावद्वृष्टिन भवति, प्रलयकालिकप्रखरसूर्यरश्मयो जलानि शोषयन्ति, येन सर्वे जीवा कालकवलिता भवन्ति। तत सकर्षणमुखोद्गतोऽनल स्थावरजगमात्मक समस्त ससार भस्मसात्करोति। दह्यमान चेदमखिल विश्व गोमयपिण्डमिव प्रतीयते। तदनन्तर शतवर्षपर्यन्त निरन्तर धारासपात वर्षण भवति, येन सकल जगज् जलमय जायते। उत्पत्तिसमयेऽनुलोमक्रमेण यत्तत्व यत उत्पद्यते, प्रलयसमये विलोमक्रमेण तत्तत्व तत्रैव लीयते। तथाचोक्त श्रीमद्भागवते १२ स्कन्धे ४ अध्याये—

तदा भूमेर्गन्धगुण ग्रसन्त्याप उदप्लवे।
ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते॥
अपा रसमयो तेजस्तल्लीयन्तेऽथ नीरसा.।
ग्रसते तेजसो रूप वायुस्तद्रहित तदा॥
लीयते चानिले तेजो वायो ख ग्रसते गुणम्।
स वै विशति ख राजस्ततश्च नभसो गुणम्॥
शब्द ग्रसति भूतादिर्नभस्तमनुलीयते।
तैजसश्चेन्द्रियाण्यङ्ग! देवान् वैकारिको गुणै॥
महान्ग्रसत्यहङ्कार गुणा सत्वादयश्च तम्।
ग्रसतेऽव्याकृत राजन्! गुणान् कालेन चोदितम्।
न तस्य कालावयवै परिणामादयो गुणा।
अनाद्यनन्यमव्यक्त नित्य कारणमव्ययम्॥

न यत्र वाचो न मनो न सत्त्व
तमो रजो वा महदादयोऽमी।
न प्राणबुद्धीन्द्रियदेवता वा
न सन्निवेश खलु लोककल्प.॥

नैमित्तिकप्रलयो यथा विष्णुपुराणे ६ अशे ३ अध्याये—

चतुर्युगसहस्रान्ते क्षीणप्राये महीतले।
अनावृष्टिरतीवोग्रा जायते शतवार्षिकी॥
ततो यान्यल्पसाराणि तानि सत्त्वान्यशेषत।
क्षय यान्ति मुनिश्रेष्ठ! पार्थिवान्यनुपीडनात्॥
तत स भगवान्विष्णू रुद्ररूपधरोऽव्यय।
क्षयाय यतते कर्तुमात्मस्थास्सकला प्रजा॥
ततस्स भगवानविष्णुर्भानोस्सप्तसु रश्मिषु।
स्थित पिबत्यशेषाणि जलानि मुनिसत्तम!॥

पीत्वाम्भांसि समस्तानि प्राणिभूमिगतान्यपि ।
शोष नयति मैत्रेय ! समस्त पृथिवीतलम् ॥
समुद्रान्सरित शैलनदीप्रस्रवणानि च ।
पातालेषु च यत्तोय तत्सर्वं नयति क्षयम् ॥
ततस्तस्यानुभावेन तोयाहारोपबृंहिता ।
त एव रश्मयस्सप्त जायन्ते सप्त भास्करा ॥
अधश्चोर्ध्वं च ते दीप्तास्ततस्सप्त दिवाकरा ।
दहन्त्यशेष त्रैलोक्य सपातालतल द्विज ! ॥
दह्यमान तु तैर्दीप्तैस्त्रैलोक्य द्विज ! भास्करै ।
साद्रिनद्यर्णवाभोग नि स्नेहमभिजायते ॥
ततो निर्दग्धवृक्षाम्बु त्रैलोक्यमखिल द्विज ! ।
भवत्येषा च वसुधा कूर्मपृष्ठोपमाकृति ॥
तत कालाग्निरुद्रोऽसौ भूत्वा सर्वहरो हरि ।
शेषो हि श्वाससम्भूत पातालानि दहत्यध ॥
पातालानि समस्तानि स दग्ध्वा ज्वलनो महान् ।
भूमिमभ्येत्य सकल बभस्ति वसुधातलम् ॥
भुवर्लोक ततस्सर्व स्वर्लोक च सुदारुण ।
ज्वालामालामहावर्तस्तत्रैव परिवर्तते ॥
अम्बरीषमिवाभाति त्रैलोक्यमखिल तदा ।
ज्वालावर्तपरीवारमुपक्षीणचराचरम् ॥
ततस्तापपरीतास्तु लोकद्वयनिवासिन ।
कृताधिकारा गच्छन्ति महर्लोक महामुने ! ॥
तस्मादपि महातापतप्ता लोकात्तत परम् ।
गच्छन्ति जनलोक ते दशावृत्त्या परैषिण ॥
ततो दग्ध्वा जगत्सर्व रुद्ररूपी जनार्दन ।
मुखनि श्वासजान्मेघान्करोति मुनिसत्तम ! ॥
ततो गजकुलप्रख्यास्तडित्वन्तोऽतिनादिन ।
उत्तिष्ठन्ति तथा व्योम्नि घोरास्सवर्तका घना ॥
महारावा महाकाया पूरयन्ति नभस्थलम् ।
वर्षन्तस्ते महासारास्तमग्निमतिभैरवम् ॥
शमयन्त्यखिल विप्र ! त्रैलोक्यान्तरधिष्ठितम् ।
नष्टे चाग्नौ च सतत वर्षमाणा ह्यहर्निशम् ॥
प्लावयन्ति जगत्सर्वमम्भोभिर्मुनिसत्तम !

धाराभिरतिमात्राभि प्लावयित्वाखिल भुवम् ॥
भुवर्लोक तथैवोद्र्ध्व प्लावयन्ति हि ते द्विज ! ।
अन्धकारीकृते लोके नष्टे स्थावरजङ्गमे ॥
वर्षन्ति ते महामेघा वर्षाणामधिक शतम् ।
एव भवति कल्पान्ते समस्त मुनिसत्तम ! ।
वासुदेवस्य माहात्म्यान्नित्यस्य परमात्मन ॥
सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि महामुने ! ।
एकार्णव भवत्येतत्त्रैलोक्यमखिल तत ॥
मुखनिश्वासजो विष्णोर्वायुस्ताञ्जलदास्तत ।
नाशयन्वाति मैत्रेय ! वर्षाणामपर शतम् ॥
सर्वभूतमयोऽचिन्त्यो भगवान्भूतभावन ।
अनादिरादिर्विश्वस्य पीत्वा वायुमशेषत ॥
एकार्णवे तनस्तस्मिञ्च्छेषशय्यागत प्रभु ।
ब्रह्मरूपधरश्शेते भगवानादिकृद्धरि ॥
जनलोकगतैस्सिद्धैस्सनकाद्यैरभिष्टुत ।
ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभि ॥
आत्ममायामयी दिव्या योगनिद्रा समास्थित ।
आत्मान वासुदेवाख्य चिन्तयन्मधुसूदन ॥
एष नैमित्तको नाम मैत्रैय प्रतिसञ्चर ।
निमित्त तत्र यच्छते ब्रह्मरूपधरो हरि ॥

प्रलयस्वरूपञ्च यथा तत्रैव—

नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत् ।
श्रोत्रादिबुद्ध्यानुपलभ्यमेक प्राधानिक ब्रह्म पुमास्तदासीत् ॥



## आवश्यकं वर्णाश्रमव्यवस्थासंरक्षणम् ।

पुराणानां प्रभावेण यावत्कालपर्यन्त पवित्रतमेऽत्र भारतवर्षे वर्णाश्रम व्यवस्था सुरक्षिता स्थास्यति, तावत्कालमाध्यात्मिकलक्ष्योपेता धर्मप्राणा हिन्दूजातिर्न विनाशमेष्यति, तद् द्वारा देवाना मानवानाञ्च कल्याण सततं सपत्स्यते एव । यदा वर्णसाङ्कर्येण पवित्रतमेय वर्णाश्रमश्रृङ्खला प्रणङ्क्ष्यति, तदा हिन्दुजाते पतनमवश्य भविष्यति । वर्णाश्रमश्रृङ्खलाया नारीणा पातिव्रत्यधमस्य महत्व सर्वमतिशेते । पातिव्रत्यधर्मो हि वर्णाश्रमव्यवस्थाया

मूलमस्ति। वर्णाश्रमधर्मह्रासेनैव पातिव्रत्यधर्मस्य ह्रास सभवति। राजैव प्रजा धर्ममार्गे प्रचालयितु शक्नोति। यश्च नरेंद्रो वर्णाश्रमशृङ्खला सम्यक प्रचालयति, स त्रिलोके वन्दित स्वर्गसुखभाग् च भवति। तथाचोक्त मार्कण्डेय-पुराणस्य सप्तविंशे अध्याये—३० ३१।

वर्णधर्मा न सीदन्ति यस्य राज्ये तथाऽश्रमा।
वत्स! तस्य सुख प्रेत्य परत्रेह च शाश्वतम्॥
उत्पथग्राहिणो मूढान् स्वधर्माच्चलतो नरान्।
य करोति निजे धर्मे स राजा स्वगमृच्छति॥
वर्णाश्रमविरुद्ध च कर्म कुर्वन्ति ये नरा।
कमणा मनसा वाचा निरयेषु पतन्ति हि॥

वस्तुतो वर्णाश्रमव्यवस्थापालकाना सनातनधर्मिणाम् सकल कर्मकदम्ब वर्णाश्रमधममूलकमेवास्ति। वर्णाश्रमपरम्पराया रजोवीर्यशुद्धि प्रधानास्ति। अत एव सवर्णविवाह प्रशस्यो धर्मसगतश्च स्वीक्रियते। असवणविवाह कामज पापमयश्च आख्यायते। वर्णाश्रमव्यवस्थोपेक्षणात् क्षत्रियोऽपि राजकुमारो नाभागो वैश्यत्वमापन्न इति मार्कण्डेयपुराणस्य ११३ अध्यायतोऽवगम्यते। वर्णाश्रमधर्मस्य मौलिक दार्शनिक च रहस्यमवलम्ब्य हिन्दुजातिरस्मिन् विकरालेऽपि काले स्थिरा वर्तते। अत एव हिंदूजाते पवित्रताया सरक्षणाय वर्णाश्रमव्यवस्थाया सरक्षणमत्यावश्यकमस्तीति पुराणाना सिद्धान्त।

●

# मुक्तिप्रयोजकानि पुराणानि

ननु पुराणाना मुक्तिप्रयोजकत्व कथमितिचेत्, अत्रोच्यते, ऋतम्भर-प्रज्ञया कृतसर्वतत्वसाक्षात्कारा लब्धयथार्थज्ञाना हि भारतीयसमाजनियम-प्रवर्तका व्यासवाल्मीकिप्रभृतयो महामुनयो समाजोपकाराय निरन्तर प्रयतमाना आसन्। यथा यथा समाजेभ्य पापानि दूरीभवितुमर्हन्ति, तथा तथा सततते चेष्टन्ते स्म। यथा वा दुर्वृत्ते सबले सुवृत्ता दुर्बला नाभिभूयेरन्, पापाचारिभि सत्कर्मचारिणो न पराभूयेरन्, समाजे किमप्यपूर्व स्वर्गसुखमुप-स्थाय मानवजन्म सार्थक सम्भवेदिति सत्कर्मसु लोकाना स्पृहा समुपजायेत, तथा नियमान् व्यवस्थापयन्त जगतीतलेऽस्मिन् आर्य सनातनधममक्षुण्ण परि-पालयितुकामा निष्कामा महामनस पूज्यतमा अपि भूतले विहरन्तिस्म।

इदमसत्कर्म, एतदाचरणेन गाढतमसुखमुत्पद्यते सद्य, येन पृथ्वीमिमा परिहाय लोकान्तरगमनेऽपि नास्ति निस्तार। तत्र प्राक्तनेन दुष्कर्मणा प्राप्त

नरकमपि सर्वविधदु खदायकमुपस्थित भवति, तदा समुपतिष्ठते चात्मनि ग्लानि , जायते च पापकर्मणो घृणा, उत्पद्यते च मनसि एवविधा भावना यत् यदि कदाचिद् भूय मानवजन्म लभेय तदा न पुन पापलेशमपि समुपार्जयेयम्, येनेदानीमीदृश कठोरतर दु सह दु खमनुभूयत इति ।

एतच्च विवरण पुराण प्रणेता व्यास सरसेन, सरलेन, सुगमेन समीचीनेनोपन्यासमुखेन सयोजयामास । पुराणेषूपन्यासमुखेन पूर्ववृत्त पठन्तो विजानन्तो जीवा असत्कर्मणो विपन्निर्वतकता सत्कर्मणश्च सुखादिसम्पादकता ज्ञात्वा शुभकर्माणि प्रवर्तन्तेऽसत्कर्मभ्यश्च प्रतिनिवृत्य सुखमय ससार कर्तुं प्रभवन्ति, विलसन्ति च स्वय परमानन्दे परमात्मनि,।

प्रथमतो वाल्मीकिनामा महर्षि रामायणप्रणेताऽत्मनोऽद्भुते प्रबन्धकाव्ये वाल्मीकिरामायणे प्राधान्येन रामचरितं रावणचरित च वर्णनीयतयाऽवाललम्बे । तत्र श्रीरामस्य मर्यादापुरुषोत्तमस्य सर्वजनप्रियस्य पुण्यमय चरितम्, तदनुयायिना लक्ष्मणादीना विशुद्ध प्रेम, कौशल्यादीना मातृणामादर्शं स्नेहातिरेकम्, हनुमदादीना भक्तिवैलक्षण्यम्, सुग्रीवादीनामनुकरणीय सख्यम्, निषादाधिपते सेवाकार्यं च प्रदर्शयामास । येनातिनिकृष्टे कष्टे निपतितोऽपि रामभद्र कष्ट कष्टतया विज्ञातु न शशाक, महादु खेऽपि काञ्चित् सुखसन्तति समाशिश्रिये ।

तस्य ललनाजनललामभूता त्रिलोकरमणीमणि सहधर्मिणी जनकनन्दिनी भगवती सीता मूर्तिमतीव सतीत्वख्याते , सर्वभोग्ययोग्ये यौवने वयसि सर्वं राजकीय सुखमेकपदे परित्यज्य घोरप्रचारे कान्तारे सुखेन स्व पतिदेव श्रीराममनुवव्राज । पतिसुखेनैव सर्वं सुख मन्यमाना यथा पत्युर्न क्लेशलेश सम्भवेत्तथा सर्वदा यततेस्म ।

राम लोकशिक्षार्थमेव पितुरादेशसकेतमात्रेण विमातु प्रीतये उपस्थितमपि वसुधाधिपत्य सहसा सहर्षं तृणाय मत्वा चतुर्दश वर्षाणि यावदरण्ये स्थितो न लेशतोऽपि दु ख समाश्रयत्, प्रत्युत राज्यभोग्यतोऽप्यधिकमेवानन्द लेभे ।

भरतो नाम कैकेयीगर्भज महोदारतादिगुणगुम्फितहृदय त्यागशीलनिधिरपि राज्यमनङ्गीकृत्य ज्येष्ठभ्रातर श्रीमन्त राम प्रत्यावर्तयितु चित्रकूट प्रतस्थे । तत्रासफलो भरत रामपादुकामेव गृहीत्वा स्वशिरसि च सवहन् तामेव राजसिंहासने सस्थाप्य स्वय नगराद्बहिरेव नन्दीग्रामे रामस्य प्रत्यावर्तन यावत् राम इव कृततापसवेश समयमतिवाहितवान् ।

एव प्रकाराणि बहूनि आदर्शमयानि उपदेशप्रदानि समाजसमुन्नयन [illegible] राष्ट्रहितकराणि उभयलोकसुखसम्पादकानि सद्वृत्तानि समुप [illegible] इतिहासे च ।

पुराणेतिहासयोरेतादृशाना सद्वृत्ताना पर्यालोचनात् परिणामे रामादीना सद्वृत्तधारिणा शुभसम्पादकतादर्शनेन जायते सद्वृत्तावलम्बने भूयसी समासक्ति ।

तत्रैव दुर्वृत्तानि अपि कानिचिदुपलभ्यते । यथाहि क्षपाचरराजो रावण निखिलदुष्टकर्मानुबन्धी पापस्य सिन्धुरिव विविधदुर्विधानेन व्यस्त चकार समस्त जगत्, दु खितानि च कृतवान् धर्मैकव्रतिना नि स्पृहाणा यमनियमादिसाधनसमाशक्तमानसाना मुनीना मनासि, विध्वस्तवाश्च जगन्मङ्गलसाधनभूत यज्ञादिकम् विश्वामित्रतपोवने राक्षसी राक्षसाश्चोपस्थाय ।

तेन तेन पापसम्पादकेन धमविघ्नकमणा परिणामे राक्षसकुलविनिपात एव समुपलभ्यते । शुभकर्मानुरक्ताना शुभसम्पाता , अशुभकर्मावलम्बिनामशुभसम्पाताश्च प्रादुरभवन् ।

इतिहासेषु पुराणेषु च एवविधाना सत्कमणा शुभहेतुतादशनेन, अशुभ कर्मणामशुभहेतुताप्रदर्शनेन च लोकाना शुभेषु रतिमुत्पाद्य, अशुभकमणामशुभसाधनतामावेद्य तत्र तत्र प्रवृत्तिनिवृत्तिसम्पादनद्वारा परमपुरुषार्थं प्रति अनुकूलता सम्भवति पुराणानाम् ।

एव महाभारते पुण्यचरित्राणा युधिष्ठिरादीना शुभसाधकता, पापाचारिणा दुर्योधनादीना चरित्रवर्णनेन असद्वृत्तस्य परिणामे विनाशमात्रफलकतामुपदर्श्य तत्रैव सम्पादित कोऽपि सद्वृत्तासद्वृत्तयोर्ग्रहणपरिहारोन्मुखप्रसारो नरसमाजेषु ।

सन्ति हि पुराणेषु वहूनि पुण्यप्रकर्षसम्पादकानि वृत्तानि । यथा सुचरिताना चरित्रप्रकर्षवर्णनमुखेन दुष्टचरित्राणा चरित्रापकषवणनेन च साधारणजनाना व्यवहारविधौ शिक्षाप्रदान पुराणानामुत्तम काय दर्शं दर्शं कस्य सहृदयस्य चेतो न चमत्कृत भवति ?

पुराणेषु चतुर्णा वर्णानाम्, आश्रमाणाम्, पुरुषार्थानाम्, राजनीते , समाज रीते , लोकव्यवहारस्याचारविचारादीना यथेष्ट वणन विद्यते । उपासनाया भण्डार , मुक्तिद्वार च पुराणमेवास्ति । पञ्चदेवोपासनाया विचार भगवदव तारादीना विशेषता पुराणेषु एव प्रतिपादिताऽस्ति । नवधाभक्तिकथा, भगवच्चरणेषु अनुरागविधिश्च पुराणेष्वेवोपलभ्यते । ससारस्य सर्वविधाना विषयाणामन्वेषण पुराणद्वारैव भवितुमर्हति । किं बहुना ? लोकद्वयसाधन प्रकार पुराणेष्वेवावलोक्यते ।

एवं पुराणेषु महापुरुषाणा चरित्राणि वर्णितानि सन्ति । मनुष्या हि पुराणाना कथा श्रुत्वा चतुर्णामपि धर्मार्थकाममोक्षाणा साधन कर्तुं शक्नुवन्ति । तस्मात्सिध्यति । नि शसय पुराणाना मुक्तिप्रयोजकत्वम् ।

## पुराणेषु परस्पर विरोधस्यपरिहारः

यद्यपि तत्तत्पुराणेषु साम्प्रदायिकभावनाया प्रतीतिर्भवति । यथा शिवपुराणे शिव विष्णुब्रह्मणो स्रष्टा, विष्णुपुराणे विष्ण शिवब्रह्मणो निर्माता, देवीभागवते भगवती ब्रह्मविष्णुमहेशाना प्रसवित्री, सूर्यपुराणे च सूर्यस्यैव सवसवितृत्व दृश्यते । किञ्च बहुषु स्थलेषु कथायामपि परस्पर भेदो दृश्यते, येन अष्टादशाना पुराणाना व्यासकर्तृत्व न प्रतिभाति, तथापि कल्पभेदाद्भेदप्रत्ययव्यवस्थया निर्वाहात् न कापि विप्रतिपत्ति सम्भवति । तथा चोक्तमभियुक्तै —

> क्वचित् कचित्पुराणेषु विरोधो यदि लभ्यते ।
> कल्पभेदादिभिस्तत्र व्यवस्था सद्भिरिष्यते ॥

वस्तुतो "नमोऽस्त्वनन्ताय सहस्रमूर्तये" "सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्" इत्यादिवचनैरेक एव परमात्मा भक्ताना भावनानुसार अनेकनामरूपभावादिभिर्वर्णितोऽस्ति । अतएव श्वेताश्वतरोपनिषदि "एको देव सवभूतेषु गूढ" ऋग्वेदे च–

> इन्द्र मित्र वरुणाग्निमाहुरथो दिव्य स सुपर्णो गरुत्मान् ।
> एक सद्विप्रा बहुधा वदन्ति अग्नि यम मातरिश्वानमाहु. ॥

इत्यादिना स्पष्टतया एक एवेश्वरोऽनेकरूपैर्वणितो वतते । अत एव च महिम्न स्तोत्रे पुष्पदन्ताचाय शिव स्तौति—

> रुचीना वैचित्र्यादृजुकुटिलनानापथजुषाम्,
> नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥

केवलेनोपासनाभेदेन एक एवेश्वर ब्रह्मविष्णुशिवशक्तिसूर्यादिनाम्ना निरूपितोऽस्ति, न तेषु वास्तविको भेदोऽस्ति ।

ये च तेषु वास्तविक भेद मन्यन्ते, न ते विचारवन्त सन्ति । यथाचोक्तम्

> ब्रह्माण केशव रुद्र भेदभावेन मोहिता ।
> पश्यन्त्येक न जानन्ति पाखण्डोपहता जना ॥

अपि च—

> एका मूर्तिस्त्रयोदेवा ब्रह्मविष्णुमहेश्वरा ।

अतएव श्रीमद्भगवद्गीताया भगवान् श्रीकृष्णा —

> यो यो या या तनु भक्त श्रद्धयार्चितुमिच्छति ।
> तस्य तस्याचला श्रद्धा तामेव विदधाम्यहम् ॥

तस्मात्—"अष्टादशपुराणाना कर्त्ता सात्यवतीसुत. ।" इति वचनानुसार अष्टादशपुराणनिर्माता व्यासदेव एवास्ति । तेनैव समन्वयात्मकदृष्ट्या विभिन्नसम्प्रदायोपासकाना भक्तानामिष्टदेवतासु श्रद्धोपपादनाय तत्तत्पुराणेषु तत्तद्देवानामुत्कृष्टता प्रदर्शितास्ति । विचारपूर्वक पुराणानामध्ययनेनेद प्रतीयते यद् एकस्यैव परमात्मनो ब्रह्मविष्णुशिवशक्ति

सूर्यादय विभिन्नानि सगुणानि रूपाणि सन्ति । यतो हि सृष्टौ एषा कार्यं भिन्न भिन्नमस्ति। तथा च-उपासकाना विभिन्नत्वात् पुराणानि विभिन्नदेवताभक्तिपोषकाणि सन्ति । यथाह स्कन्दपुराणस्य सृष्टिखण्डे—दशसु पुराणेषु भगवत शिवस्य गुणगान कृतमस्ति। चतुषु पुराणेषु ब्रह्मणो महिमा वर्णितो विद्यते द्वयो। पुराणयो देव्या उत्कर्षो वर्णितो वर्तते। तथा पुराणद्वये भगवतो विष्णो गौरव गीतमस्ति ।

अष्टादशपुराणेषु दशभिर्गीयते शिव ।
चतुर्भिभगवान् ब्रह्मा द्वाभ्या देवी तथा हरि ॥ २।३०।३८

यो हि मनुष्यो यस्य देवस्य भक्तो भवति, स तस्य देवस्य महत्त्वप्रकाशक पुराण विशेषत समाद्रियते, श्रद्दधाति च तत्र। अष्टादशसु महापुराणेषु भिन्न भिन्नसम्प्रदायसामग्रीसत्वेऽपि वैष्णवशैव शाक्त पुराणेषु, अष्टादशाना पुराणाना पाठश्रवणयो फलस्य वर्णन सर्वेषा कृते समानमेवास्ति। तथाचोक्तम्—

अष्टादशपुराणाना नामधेयानि य पठेत् ।
त्रिसन्ध्य लभते नित्य सोऽश्वमेधफल लभेत् ॥
ये त्वेतानि समस्तानि पुराणानि च जानते ।
भारत च महाबाहो ! ते सर्वज्ञा मता नृणाम् ॥

●

## पुराणेषु विष्णोः शरीरावयवत्वकल्पनम्

पुराणेषु ब्रह्मपुराण विष्णोर्मस्तकम्, पद्मपुराण हृदयम्, विष्णुपुराण दक्षिणो बाहु, शिवपुराण वामबाहु, भागवत वक्ष स्थलम्, नारदीयपुराण नाभि, मार्कण्डेयपुराण दक्षिणपाद, अग्निपुराण वामपाद, भविष्यपुराण दक्षिणजानु, ब्रह्मवैवर्तं वामजानु, लिङ्गपुराण दक्षिणगुल्फम्, वाराहपुराण वामगुल्फम्, स्कन्दपुराणम् रोमाणि, वामनपुराण त्वक्, कूर्मपुराण पृष्ठम्, मत्स्यपुराण मेद, गरुडपुराण मज्जा, ब्रह्माण्डपुराणमस्थि चास्ति। एवम्प्रकारेणाष्टादशपुराणेषु एक एव भगवान् विराजते। तथा चोक्तम् पद्मपुराणे स्वर्गखण्डे —

वैष्णव दक्षिणो बाहु शैव वामो महेशितु । ऊरू भागवतम्प्रोक्त नाभि स्यान्नारदीयकम् ॥
मार्कण्डेयञ्च दक्षाङ घ्रिर्वामो ह्याग्नेयमुच्यते । भविष्य दक्षिणो जानुर्विष्णोरेव महात्मन ॥
ब्रह्मवैवर्तसञ्ज्ञ तु वामो जानुरुदाहृत । लैङ्ग तु गुल्फक दक्ष वाराह वामगुल्फकम् ॥
ब्राह्म मूर्धा हरेरेव हृदय पद्मसञ्ज्ञितम् । स्कान्द पुराण लोमानि त्वगस्य वामन स्मृतम् ॥
कौर्म पृष्ठ समाख्यात मात्स्य मेद प्रकीर्त्यते । मज्जा तु गरुडम्प्रोक्त ब्रह्माण्डमस्थि गीयते ॥
एवमेवाभवद्विष्णु पुराणावयवो हरि ॥ ६२।२-७

●

# अवतारतत्त्वमीमांसा

अवतारवादो हिन्दुधर्मस्यैक प्रधानो विषयोऽस्ति । उपासनाप्रणाल्या सहावतारवादस्य महान्घनिष्ठ सबन्धो वर्तते । अवतारस्य विस्तरतो वर्णन पुराणेषु विद्यते । श्रीमद्भगवद्गीतायामपि भगवता श्रीकृष्णेनाऽर्जुन प्रति आत्मनोऽनेकेषामवताराणा चर्चा कृताऽस्ति । तद्यथा—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन !
तान्यह वेद सर्वाणि न त्व वेत्थ परन्तप ! ॥

यद्यपि धर्मान्तरेष्वपि रूपान्तरेणावतारतत्वस्य सिद्धान्त समुपलभ्यते, तथापि हिन्दुधर्मस्येद वैशिष्ट्यमस्ति यदेतदीयमवतारतत्त्वस्य विज्ञानमेकस्यां सुदृढभित्तौ स्थित वर्तते वेदपुराणदर्शनशास्त्रानुसारमीश्वरो मणिमालाया सूत्रमिव सर्वत्र व्यापिकोऽस्ति । तस्य चित्कला उद्भिज्जस्वेदजाण्डजजरायुजमानवदानवदेवादिपिण्डेषु व्यापकाऽस्ति । अत एवेश्वर सर्वान्तर्यामी सर्वव्यापकश्च निगद्यते । सर्वव्यापित्वेऽपीश्वरस्य चित्कलाया विकासे नियमोऽस्ति । अथोद्भिज्जयोनिषु भगवत एकस्या एव कलाया विकासो विद्यते । स्वेदजेषु द्वयो , अण्डजेषु तिसृणाम्, जरायुजेषु च चतसृणा कलाना विकासो वर्तते । मनुष्येषु पञ्च कलातोऽष्टकला पर्यन्त विकासो भवति । अष्टकलातोऽधिककलाना धारणसामर्थ्यं मनुष्येषु न तिष्ठतीति हेतोरितोऽधिककलाना यत्र विकासो भवति, तच्छरीर दिव्यैरुपादानैरुत्पद्यते, तदेवावतार कथ्यते । अष्टकलातोऽधिका कला अवतारकेला कथ्यन्ते । ८ कलात आरम्य १५ कलापर्यन्त विकासोऽशावतारेषु भवति । पूर्णावतारे च षोडशाना कलाना विकासो जायते । अतो भगवतोऽवतारो विभिन्नासु कलासु भवति । तथा चोक्त शम्भुगीतायाम् ।

ममैवेका कलाशक्तेरुद्भिज्जेषु विकासते ।
स्वेदजेषु कलाद्वैतमण्डजेषु कलाद्वयम् ॥
चतस्रश्च कला भान्ति जरायुजगणेऽखिले ।
पञ्चकोशप्रपूर्णत्वान्मर्त्येषु प्रायशोऽमरा ॥
आकलापचकादष्टकला नून चकासति ।
नवारम्य कला यावत् षोडश मे यथायथम् ॥
सविकाश्यावतारेषु नानाकेन्द्रोद्भवेषु च ।
कुत्रचिन्मे प्रपर्यन्तेऽवतारे पूर्णसञ्ज्ञके ॥

अल्पज्ञत्वाज्जीव सर्वज्ञो भवितु नार्हति, किन्तु सर्वव्यापित्वादीश्वर सर्वज्ञोऽस्ति। सर्वज्ञत्वादेवेश्वरस्यावतारो भवति। एकस्य ब्रह्माण्डस्याधिष्ठातुरीश्वरस्य येऽवतारा भवन्ति, ते भगवदवतारा कथ्यन्ते। ब्रह्माण्ड रक्षको भगवान् विष्णुरेवास्ति। अत प्रायो विष्णोरेवावतारा भवन्ति।

यदा ससारे साधारणशक्तित कार्यं न प्रचलति, धर्मस्य ह्रासो जायते, अधमश्च प्रवधते, असुरभावनापन्ना च भावना सज्जानानुद्वेजयति, तदा भगवान् स्वयमाविर्भूयाधर्मं नाशयति, दुर्जनान्निहत्य सज्जनान्पालयति। यथा चोक्त गीतायाम् स्वयमेव भगवता श्रीकृष्णेन—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधमस्य तदात्मान सृजाम्यहम्॥
परित्राणाय साधूना विनाशाय च दुष्कृताम्।
धर्मसस्थापनार्थाय सभवामि युगे युगे॥

अवतारप्रयोजन प्रदर्शयता भगवता व्यासेनापि श्रीमद्भागवते स्पष्टमुक्तम्—

मर्त्यावतारस्त्विह मर्त्यशिक्षण रक्षोववायैव न केवल विभो।
कुतोऽन्यथा स्याद्रमत स्व आत्मन सीताकृतानि व्यसनानीश्वरस्य॥ ५।१९।५

यथा निराकारा वाय्वग्न्य सर्वव्यापित्वेऽपि ससारकल्याणाय साकारे काष्ठादिरूपे परिणता सन्त लोकानुपकुर्वन्ति, तथैव सर्वव्यापको निराकारोऽपीश्वर स्वमायासयोगेन भक्ताना प्रार्थनानुसार धमगोद्विज देवसज्जनाना रक्षार्थे मानवादिशरीरेषु आविर्भवति। तथाचोक्तम् श्रीमद्भगवद्गीतयाम्—

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्॥
प्रकृतिं स्वामधिष्ठाय, सम्भवम्यात्ममायया॥

विष्णुपुराणेऽपि—

गोविप्रद्विजसाधूना छन्दसामपि चेश्वर.।
रक्षामिच्छन्तनुधत्ते धमस्यार्थस्य चैव हि॥

सर्वव्यापकत्वात्परमात्मन शक्तिरपि सर्वव्यापिकाऽस्ति। जडचेतनात्मकदृश्यद्वारेव तस्या विकासो भवति। अतएव विश्वस्मिन् यत्किञ्चिद् दृश्यते, तत्सर्वं तच्छक्तिरेवाऽस्ति। तथाचोक्तम् पञ्चदश्याम्—

सवशक्तिमय ब्रह्म नित्यमापूणमव्ययम्।
यथोल्लसति शक्त्याऽसौ प्रकाशमधिगच्छति॥

भगवतो विष्णो कियन्तोऽवतारा भवन्तीति जिज्ञासाया चतुर्विंशत्य वतारान्निरूप्य श्रीमद्भागवते प्रथमस्कन्धे तृतीयाध्याये व्यासदेवेन लिखित,, यत्—

अवतारा ह्यसङ्ख्येया हरे सत्त्वनिधेर्द्विजा ।
यथा विदासिन कुल्या सरस स्यु सहस्रश ॥
ऋषयो मुनयो देवा मनुपुत्रा महौजसः ।
कला सर्वे हरेरेव सप्रजापतय स्मृता ॥
एते चाशकलापुस कृष्णस्तु भगवान् स्वयम् ।
इन्द्रारिव्याकुल लोक मृडयन्ति युगे युगे ॥
एतद्रूपो भगवतो ह्यरूपस्य चिदात्मन ।
मायागुणैर्विरचित महदादिभिरात्मनि ॥

तत्रापि मुख्या दशावतारा सन्ति । तथाहि—

मत्स्य कूर्मो वराहश्च नृसिहो वामनस्तथा ।
रामो रामश्च कृष्णश्च बुद्ध कल्किर्दश स्मृता ॥

यावदीश्वरनियमे काऽपि बाधा नोपतिष्ठते, तावन्नावतरति भगवान् । यदा तन्नियमेऽसामञ्जस्यमुपतिष्ठते तदा पञ्चकलात आरभ्य अष्टकलासु स्वविभूति द्वारा भगवान् सामञ्जय स्थापयति । पर यदि विभूतिद्वारापि कार्यं न प्रचलति, धर्मधारा अव्यवस्थिता बोभवीति तर्हि ता व्यवस्थापयितु कदाचिद् अशेन कदाचिच्च सर्वाभि कलाभिर्वाऽवतरति भगवान् ।

शास्त्रेषु पञ्चविधा अवतारा उपलभ्यन्ते (१) पूर्णावतार (२) अशावतार (३) विशेषावतार (४) अविशेषावतार (५) नित्यावतारश्च । तत्रा कलाभेदेनावतारो द्विविधो भवति-पूर्णावतार, अशावतारश्च । ९ कलात १५ कलापयन्तमवतार अशावतार, कथ्यते । तथा षोडशभिः कलाभिरवतार पूर्णावतार प्रोच्यते, यथा परशुरामो द्वादशकलावतार आसीत्, किन्तु सीता-स्वयवरानन्तरन्तस्य कला यदा रामे आकृष्टास्तदा स केवल मुनिमात्रमवशिष्ट । तथाचोक्त वाल्मीकीये रामायणे अयोध्याकाण्डे—

तत परशुरामस्य देहान्निगत्य वैष्णवम् ।
पश्यता सवदेवाना तेजो राममुपागमत् ॥

यथा षोडशभि कलाभि परिपूर्णश्चन्द्रमा पूण कथ्यते, तथैव यत्र भगवत षोडशापि कला आविर्भवन्ति स भगवत पूर्णावतारो निगद्यते । अत एवोक्तम् "षोडशकलो वै पुरुष." इति । भगवतो वामनाद्यवतारा अशावतारा आसन् । भगवान् श्रीकृष्णस्तु पूर्णावतार आसीत् । तथाचोक्तम् श्रीमद्भागवते—

'अन्ये चाशकला पुस कृष्णस्तु भगवान्स्वयम्' इति ।

अशावतारपूर्णावतारयोरिदमेवान्तरमस्ति यत्—अशावतारस्य कर्म एकदेशस्यैककालस्यैकस्या परिस्थिते कदाचिदेकस्यापि कस्यचित्कृते हितकर भवति, किन्तु पूर्णावतारस्य कर्म सपूर्णस्य देशस्य सकलस्य कालस्य सर्वासा-

मेव परिस्थितीना सर्वेषा जीवाना च हिताय भवति। यथाशावतारस्य परशुरामस्य क्षत्रियसहारकर्म तदानीमावश्यकमासीत्, किन्तु तत्सदा आवश्यक नास्ति। बुद्धसमये चेश्वरमुपेक्ष्य यज्ञविरोध च विधाय अहिंसा-प्रचारस्तदानी परमावश्यक आसीत्, परन्तु यज्ञविरोधो न सवकालोपयोगी विद्यते। किन्तु लीलापुरुषोत्तमस्य भगवत श्रीकृष्णस्य मर्यादापुरुषोत्तमस्य चादर्शमय कायकलाप सकलस्य देशस्य, कालाया आवस्थाया, सर्वेषा जनाना च कृते अत्यन्तमुपयोगी अनुकरणीय आश्रयणीयश्चाऽस्ति। एव निमित्तभेदादपि द्वावतारौ भवत, विशेषावतारोऽविशेषावतारश्च, तत्र विशेषावतार दीक्षासमये शिष्याणामन्त करणे भवति। अतएव गुरुर्ब्रह्मादिरूपो मन्यते। तथाहि—

गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वर ।
गुरुरेव परम्ब्रह्म तस्मै श्रीगुरवे नम ॥

अविशेषावतारेषु कादचित्को भगवद्भावस्यावेशो भवति। यदा भगवद्भावस्यावेशो भवति, तदा स भगवत्समो भवति, अन्यथा साधारणजन इव प्रतीयते। सनकादिनारदपृथुप्रभृतयो महापुरुषा अविशेषा अवतारा आसन्। तथाचोक्तम्—

आविष्टोऽभूत् कुमारेषु नारदे च हरिर्विभु ।
अविशेष पृथुर्देव शखी चक्री चतुर्भुज ॥

मनुष्याणामन्त करणेषु नित्यावतारो भवति, यथा सर्वशक्तिमत सर्वव्यापकस्य ज्ञानमयस्य परमात्मन सवत्र सत्वात्सवजीवाना हृदये विराजमान स पापकर्मत प्राणिनो निवारयति, पुण्यकर्मणि च प्रेरयति येन जीवस्य पापकर्मत सदा सकोच, धमकार्येषु च प्रवृत्तिर्भवति।

सृष्टिकार्यापयोगिनो यस्य यस्यावतारस्य नाम्ना यद्यद् पुराण निर्मितमस्ति, तत्र तत्र तस्य तस्यावतारस्य विशेषवर्णन विद्यते, तद्द्वारा च कस्मैचिदुपदेशोऽवश्य प्राप्यते। यथा मत्स्यपुराणे मत्स्यद्वारा मनवे, कूर्मपुराणे कूर्मद्वारा देवताभ्य, वाराहपुराणे वाराहद्वारा पृथिव्यै, नरसिंहपुराणे नरसिंहद्वारा प्रल्हादाय, वामनपुराणे वामनद्वारा वलये उपदेशो दत्तोऽस्ति। सर्वेष्वपि पुराणेषु प्रायोऽवतारस्य चार्चाऽस्ति। तस्येदमेव मुख्य कारणमस्ति यन्मनुष्या अवताराणा चरित्र श्रुत्वा महिमानञ्चावगत्य स्वान्त करणेषु भक्तिज्ञानवैराग्यादिद्वारा मानव जीवनस्य लक्ष्यभूता भगवत्प्राप्ति कर्तु समर्था भवेयु। पुराणेष्वैकमत्या स्वीकृतमस्ति यद् धर्मसस्थापनद्वारा जगतो रक्षायै समये समये स्वय सर्वशक्तिमान्परमात्मा पवित्रतमेऽत्र भारतवर्षेऽवतरति।

श्रीमद्भागवते प्रथमस्कन्धे कुन्तीस्तुतौ, दशमस्कन्धे गर्भगीताया च भग वतोऽवतारविषयेऽनेकानि कारणानि बहवो युक्तयश्च प्रदत्ता सन्ति

जगति नैवंविध किञ्चित्स्थानमस्ति, यत्र सर्वव्यापकस्य निराकारस्य परमात्मन सत्ता न स्यादतोऽवतारशब्दस्यायमर्थो नास्ति यत्परमात्मा कुतोऽप्यागच्छति, किन्तु अवतारशब्दस्य वास्तविकोऽयमऽर्थोऽस्ति यदव्यक्तरूपेण सर्वत्र विराजमानस्य परमात्मनो व्यक्तीभवनम् । "ईशावास्यमिद सर्व यत्किंचिज्जगत्या जगत्" इति यजुर्वेदानुसार इद जगति यत्किंचिदस्ति, तत्सर्वपरमात्मन स्वरूपमेवास्ति । यथाच भगवान् विष्णुयदा जगद्रक्षाभिप्रायेण स्वचिन्मय कलाया स्वशक्तेश्च प्रकाश कस्यचन जीवस्याश्रयेणेह जगति विशेषत प्रकाशयति, तथा सैव लीलाविग्रहरूपा तस्य सर्वप्रत्यक्षावतारशब्दऽभिधेया भवति । अतो व्यक्तत्वेऽपि परमात्माऽव्यक्तोऽस्ति । प्राकटयेऽपि गुप्तोऽस्ति । यथा ससारिणो अज्ञा जीवा परमात्मानमनवगत्य अत्याचारानाचारादिषु प्र वतन्ते, तदा जगतो व्यवस्था कर्तुमेकस्या शक्तेरेवावश्यकताऽस्ति । अतस्तद्रूपे स्वय परमात्मैवावतरति ।

न केवल पुराणेष्वेव किन्तु वेदे ब्राह्मणे, आरण्यके, उपनिषदि, रामायणे महाभरते च अवताराणा प्रसङ्ग उपलभ्यते । यथा ऋग्वेदे "इद विष्णुर्विचक्रमे त्रेधा निदधे पदम् ।" (१।२२।१७) शतपथ ब्राह्मणे च "वामनो ह विष्णुरासनम्" । १२।५।५ इत्यादिना वामनावतारस्य प्रसग उपलभ्ते । अथर्ववेदे—"वराहेण पृथ्वी सविदाना" (१२।१।४८) । तैत्तिरीयारण्यके च

"उद्धृताऽसि वराहेण कृष्णेन शतबाहुना"

"आपो वा इदमग्रे सलिलमासीत् तस्मिन् प्रजापतिर्वायुर्भूत्वा चरत् सह मामपश्यत्, त वराहो भूत्वा हरत्, स वराहो रूप कृत्वाऽभ्युपमज्जत्, स पृथ्वीमध्ये आर्छत् ।"

इत्यादिना च वाराहावतारस्ण प्रसङ्ग उपलभ्यते । शतपथब्राह्मणे च—

"मानवे ह वै प्रात मत्स्य सहापाणी आपेदे सहास्मै वाचमुवाच, बिभृहि माम् पारिष्यामि त्वेति । कस्मान्मां पारयिष्यसीति औघ इमा सर्वा प्रजा निर्वोढा स्ततस्त्वा पारयिताऽस्मि ।" ( १।८।१।१ ) इत्यादिना मत्स्यावतारस्योपाख्यानमुपलभ्ते । तैत्तिरीयारण्यके च कूर्मावतारस्य प्रसङ्ग एवमस्ति—

"अन्तरत कूर्मभूत तमब्रवीत् मम वै त्वङ्मासात् समभूत् नेत्यब्रवीत् पूर्वमेवाहमिहासम् इति तत्पुरुषस्य पुरुषत्वम् स सहस्रशीर्षा सहस्राक्ष सहस्रपाद् भूत्वोदतिष्ठत् । ( १।२३।३ ) इति ।

"वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि तन्नो नरसिंह प्रचोदयात्" ( १।१।३१) इत्यादिना तैत्तिरीयारण्यके नरसिंहावतारस्य प्रसङ्ग उपलभ्यते ऋग्वेदे—विश्वामित्रो यदवहत्सुदासम्" ( ३।३।२२ )

समावेदे च—

"शुभ्रकेतैद्यु तिमिरग्निर्वितिष्ठिनुषद्भिर्वर्णैरभिराममस्थात् ।" (१५।२।१।३)

इत्यादिना रामावतारस्य प्रसङ्ग उपलभ्यते ।

ऋग्वेदे—

"यदप्रवीता दधते ह गम सदाचिज्जगतो भवसीदुदूत" (४।७।७।८)

अथर्ववेदे च—

घृत पीत्वा मधु चाह गव्य पीतेव पुत्रानभिरक्षतादिदम्" (२।१३।१)

तैत्तिरीयारण्यके च—

"नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णु प्रचोदयात् ।" ( १०।१।६ )

छान्दोग्योपनिषदि च—

"एतद्धोरआगिरस कृष्णाय देवकीपुत्रायोक्त्वोवाच ।" (३।१८।६)

इत्यादिना कृष्णावतारस्य च पुष्कल प्रसङ्ग प्राप्यते ।

वैदिकग्रन्थेषु येषामवताराणामाभासो मिलति तेषामेव पुराणेषु रूपान्तरेण विस्तार उपलभ्ते । तस्मात्पुराणप्रतिपादिता अवतारा वेदमूलका एव सन्तीति न कापि विप्रतिपत्तिर्भवितुमर्हतीति विदाकुर्वन्तु पिद्वास ।

एव वैदिकवाङ्मयानुशीलनेन एष निष्कर्षो नि सति यद् यथा वेदो ज्ञान-कम-भक्तीना मुद्गमस्थल विद्यते तथैव भगवदवतारणामपि मूल स्रोतो वेद एव ।

ऋग्वेदे हि विष्णुसूक्तस्य विभिन्नेषु मन्त्रेषु वामनावतारस्य सङ्केत उपउभ्यते । शतपथब्राह्मणे च ऋग्वेदस्योरगाय त्रिविक्रमं भगवन्त विष्णु चैकीकृत्य पुराणेषु वामनावतारस्य पूर्णं प्रसङ्ग प्रस्तुतोऽस्ति तथान्तर मिदमेवास्ति यद् तत्र शतपथब्राह्मणे असुरेभ्यो भूमे हरणमुक्तमस्ति तत्र पुराणेषु वलेवल पृथिव्या हरण प्रप्रशितमस्त् । अपि च शतपथस्य कथानक यत्र वैअसुराणा भूमौ यज्ञस्य विस्तार विधाय सा आत्मसात् कृता । तत्र पुराणेषु त्रिभि क्रमै पृथ्वी बलिशरीराक्रमणानन्तर वामनेन सकला भूमिम-सुरेभ्यो गृहीत्वा इन्द्रदेवाय समर्पिता । इत्थ शतपथीय पौराणिक चाख्यान भगवतो महिमान व्यनक्ति । वामनपुराणे वामनावतारस्य विस्तृत विवेचन विधते ।

# भक्तितत्त्वविवेचनम्

यत्कीर्तनं यत्स्मरणं यदीक्षणं यद्वन्दनं यच्छ्रवणं यदर्हणम्।
लोकस्य सद्यो विधुनोति कल्मषं तस्मै सुभद्रश्रवसे नमो नमः॥

इह खलु संसारे सुखं मे शाश्वतं भूयात्, दुःखं च कदाचिन्माभूदिति, दुःखं हातुं सुखञ्चोपलब्धुं सततमभिलषति प्राणिमात्रम्। तथाचोक्तं महाभारतस्य शान्ति पर्वणि–दुःखादुद्विजते जन्तुः सर्वस्य सुखमीप्सितम्। नहि कोऽपि विवेकी स्वल्पे सुखमनुभवति, सर्वोऽपि जनोऽधिकादधिकमेव सुखं वाञ्छति।

परन्तु नास्ति सांसारिकस्य सुखस्य काऽपि सीमा। एकस्य सुखदस्य वस्तुनः प्राप्तौ सत्यामन्यस्य कामना उत्तरोत्तरं जागर्त्येव। अत एवोक्तवान् राजा भर्तृहरिः वैराग्यशतके—

निस्वो वष्टि शतं शती दशशतं लक्षी सहस्राधियो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशतां वाञ्छति।
चक्रेशः पुनरिन्द्रतां सुरपतिः ब्राह्मं पदं याजते
ब्रह्मा विष्णुपदं हरिः शिवपदं तृष्णावधिं को गतः॥

गरुडपुराणेऽपि भगवान् व्यासः—

इच्छति शती सहस्रं सहस्री लक्षमीहते।
लक्षाधिपस्तथा राज्यं राजा च स्वर्गमीहते॥

एवं च सुखान्वेषणे शती सहस्री भवितुमिच्छति, सहस्री लक्षी, लक्षी च राजा बुभूषति, राजा चक्रवर्ती, चक्रवर्ती चैन्द्रं पदमाकाङ्क्षति। जीवो यावदनन्तं सुखं न लभते, तावत् प्रयतमान एव तिष्ठति। तथा चाह भगवती छान्दोग्य श्रुतिः — "नाल्पे सुखमस्ति भूमैव सुखम्।"

एवञ्च भगवत्साक्षात्कारस्वरूपमेवात्यन्तिकमनन्तं सुखमेव जीवस्य वास्तविकं लक्ष्यं चरममुद्देश्यं मानवशरीरलाभस्य फलञ्चास्ति, आत्यन्तिकं निरतिशयं सुखमेव मोक्षः, मुक्तिः, परमपुरुषार्थः, निःश्रेयसञ्चोच्यते। एतल्लब्ध्वा जीवः कृतकृत्यो भवति, न तस्य किञ्चित्कर्तव्यमवशिष्यते। एतदेव सुखस्य चरमा सीमा परमा च गतिरस्ति। तथाचोक्तं श्वेताश्वतरोपनिषदि—

"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय। ३।८

अपि च छान्दोपनिषदि गार्गीं प्रति मैत्रेयः—आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च।४।५

अतो निरवधिकस्य सुखराशे परमात्मन प्राप्तिरेव चरम सुखमस्ति। अत श्रीमद्भगवद्गीताया-मपि भगवता श्रीकृष्णेन स्पष्टमभिहितम्—

य लब्ध्वा चापर लाभ मन्यते नाधिक तत ।
तस्मिन् स्थितो न दु खेन गुरुणापि विचाल्यते ॥

यद्यपि "अपाम सोमममृता अभूम्" इति श्रुत्या सोमपानादिभि लभ्यस्य स्वर्गादेरपि सुखसाधनत्व प्रतीयते, तथापि "क्षीणे पुण्ये मर्त्यलोक विशन्ति" इति गीतावाक्ये भोगेन पुण्याना क्षयात्स्वर्गाच्च्युतिदर्शनान्न तदात्यन्तिक सुखसाधन मन्यन्ते विद्वास ।

वेदान्तसिद्धान्तानुसार ब्रह्मैव पूर्णसुखस्वरूप निरतिशयानन्दरूपमस्ति। अभेदोपासनया तत्साक्षात्कृत्य जीव सर्वदु खविमुक्तो भूत्वा परमानन्द विन्दते शाश्वती च शान्ति लभते ।

भेदोपासनया च परमात्मन साक्षात्कार सम्पाद्य जन्म मृत्युबन्धनक्लेश रहितो जीव सगुणस्य भगवतो नित्यलीलाधाम्नि अप्राकृतशरीरेण निवसन् भगवत्सांनिध्यसुखमनुभवति। अत भगवत्स्वरूपसाक्षात्कारमन्तरा न किम प्यस्ति वास्तविक सुखम्। निरतिशयसुखेप्सुभि भगवत्स्वरूपसाक्षात्काररूप मुक्तयेऽवश्य प्रयत्नो विधेय ।

श्रीमद्भागवतस्यैकादशे स्कन्धे विंशत्यध्याये—

योगास्त्रयो मया प्रोक्ता नृणा श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
कर्मभिर्भगवद्भक्तिर्भवतीशकृपा तथा ।
ज्ञान तेन विमुक्तिश्च मोक्षधर्मार्थसंग्रह ॥

इतिवचनानुसार मुक्ते प्रधानानि त्रीणि साधनानि सन्ति। निष्काम कर्म, ज्ञान, भक्तिश्चेति। तेषु ज्ञानस्य कृपाणधारासमानत्वेन सर्वसुल भत्वाभावात् निष्कामकर्मणश्च कष्टसाध्यत्वाद्भक्तिरेव सर्वसाधारणा सुभगा सुलभा च प्रतीयते।

सत्ययुगादौ ज्ञानवैराग्ययोर्मोक्षसाधकत्वेऽपि कलियुगे भक्तेरेव प्राधान्य मस्ति। तथाचोक्त पद्मपुराणस्य श्रीमद्भागवतमाहात्म्ये—

सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ।
कलौ तु केवल भक्तिर्ब्रह्मसायुज्यकारिणी ॥ २।४

किञ्च— न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा।
हरिर्हि साध्यते भक्त्या प्रमाण तत्र गोपिका ॥ २।१८

तत्र क. भगवान्? काच तस्य भक्ति? इति प्रश्ने सक्षेपादिदमेव वक्तु शक्यते यत्—य सर्वशासक, सर्वशक्तिमान्, सर्वान्तर्यामी, सर्वसाक्षी सर्वज्ञ

श्चास्ति, यस्य भक्त्या मानव सकलदुर्गुणदु खविमुक्तो भूत्वा विशुद्धो भवति। योऽजोऽपि जीवेषु दया कृत्वा—

यदा यदा हि धमस्य ग्लानिभवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मान सृजाम्यहम् ॥
परित्राणाय साधूना विनाशाय च दुष्कृताम् ।
धमसस्थापनार्थाय सभवामि युगे युगे ॥

इति गीताया स्वकीयप्रतिज्ञानुसार जीवाना कल्याणाय, धर्मप्रचाराय, दुष्टदलनाय च समये समये स्वलीलया देवमनुष्यपशुपक्ष्यादिषु साकाररूपेण प्रकटीभूय भक्तानाह्लादयति, शास्त्रीयमर्यादा स्थापयति, सुखयति च लोकम् । यश्च सत्ययुगे हरिरूपेण, द्वापरे कृष्णरूपेणाविर्भवति, स एव नित्य , अविनाशी विज्ञानानन्दघन सवव्यापी परमात्मा भगवान् बोद्धव्य ।

भक्ते किंस्वरूपम् ? इति जिज्ञासायाम् प्राह महर्षि शाण्डिल्य—

"सा परानुरक्तिरीश्वरे"

देवर्षिर्नारद—"सा त्वस्मि परमप्रेमरूपा, अमतस्वरूपा च"

अङ्गिराश्च—"सानुरागरूपा"

नारदपञ्चरात्रे तु—

सर्वोपाधिविनिर्मुक्त तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेशसेवन भक्तिरुच्यते ॥ इत्युक्तम् ।

एभिरिद ज्ञायते यत् भगवति अनन्य प्रेमैव भक्तिरस्ति ।

भजसेवायामितिधातो क्तिन्प्रत्ययेन निष्पन्नो भक्तिशब्दाथ सेवाऽस्ति। यथा वृक्षस्य पूर्णता फलेनास्ति, तथा भक्ते पूर्णता भगवत्यनन्य प्रेम्णैवास्ति ।

यद्यपि भगवद्भक्तौ जीवमात्रस्यास्त्यधिकारो न्याययुक्त हनुमज्जाम्ववद्गरुडगजेन्द्रकाकभुसुण्डिजटायु प्रभृतीना पशुपक्षिप्लवङ्गमादीना भगवद्भक्त्या परमपदप्राप्तिदर्शनात्, तथापि सर्वसाधारणपशुपक्षिषु ज्ञान साधनयोरभावादीश्वरभक्ति कर्तुमसमर्थतया शास्त्रकारा ईश्वरभक्तौ प्रधान तया मनुष्याणामेवाधिकार वदन्ति । तथा च बादरायणसूत्रम्—

शास्त्राधिकारत्वान्मनुष्यस्य"

भगवद्भक्तौ रूपस्यायुषश्च न मूल्यमस्ति, न च विद्याया, धनस्य जातेश्चोत्कर्षोऽप्यपेक्ष्यते । न वा सदाचारस्य सद्गुणास्य च प्राधान्यमस्ति, नापि बल मुख्य विद्यते, किन्तु प्रेमैवानन्य प्रतीक्षते भगवान् । तथाचोक्त जीवगोस्वामिना—

व्याधस्याचरण ध्रुवस्य च वयो विद्या गजेन्द्रस्य का ?
का ज्ञातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम् ?

कुब्जाया कमनीयरूपमधिकं किं तत्सुदाम्नो धनम् ?
भक्त्या तुष्यति केवलं न च गुणैर्भक्तिप्रियो माधवः ॥

भगवतः भक्तेन समं प्रियो न वैकुण्ठवासो नापि विशुद्धं योगिनां हृदयं विद्यते, किन्तु कीर्तनमेवास्ति सर्वप्रियं भगवतः । तथाचोक्तं नारदं प्रति भगवता विष्णुना—

नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ! ॥

भक्तिर्भगवतः प्राणतोऽप्यधिका प्रियाऽस्ति । भक्त्या प्रार्थितो भगवान् नीचगृहेष्वपि गच्छति । तथाचोक्तं नारदेन भक्तिं प्रति – पद्मपुराणस्य श्रीमद्भागवतमाहात्म्ये ।

त्वं तु भक्ते ! प्रिया तस्य सततं प्राणतोऽधिका ।
त्वयाऽऽहूतस्तु भगवान् याति नीचगृहेष्वपि ॥ २।३

प्रगाढया भक्त्या प्रसन्नो भगवान् सर्वमपि कार्यं परित्यज्य एकस्य भक्तस्य कृतेऽलौकिकं कर्म निर्वर्तयति-असम्भवञ्च सम्भावयति । तथाच सर्वशक्तिसम्पन्नः कर्तुमकर्तुमन्यथाकर्तुंसमर्थोऽपि भगवान् कृष्णः पाण्डवकुलनन्दनस्य धर्मराजस्य भक्तिगुणगरिम्णा प्रसन्नो भगवान् कौरवकुलं दूरे परित्यज्य पाण्डवकुलस्य मंगलचिन्तायां नियतं व्यापृतो बभूव, अर्जुनस्य रथे हीनकर्म सारथ्यमपि स्वीचकार ।

भगवान् प्रह्लादस्य भक्त्याकृष्टो यत्र यत्र तस्य विपदमभिलक्षितवान् तत्र तत्र तां वारयितुं प्रववृते । मदोन्मत्तस्य करिणः पादतलेन मर्दितं शैलशिखाराद्भूमौ प्रक्षिप्तं जीवनापहारकं च विषलड्डुकं मधुरमोदकत्वेन परिणमय्य भगवता परिपालितः प्रह्लादः । हरिनामस्मरणमात्रेण भक्तिरसाभिप्लुतः प्रह्लादः "क्व ते नारायणः ?" इति पित्रा हिरण्यकश्यपुना पृष्टः "सर्वत्रैव वर्तते मे नारायणः" इत्युक्तवान् । पुनः "यदि सर्वत्रैव वर्तते ते नारायणस्तदत्र स्तम्भे अपि वर्तेता नाम" इत्युक्तवति पितरि "बाढमिति" यदा प्राह, प्रह्लादः तदैव तेन सवेगमभिहतात् स्तम्भान्नारायणः उत्कटे नृसिंहरूपे- आविर्भूय भक्तस्य प्रतिकूलाचारिणं हिरण्यकशिपुं नखैर्विदारयन् पञ्चत्वं प्रापयामास, प्रह्लादं च तत्रैव राज्येऽभिषिच्य भक्तस्य भगवच्चिन्तनपरस्य साहाय्यं सम्पादयामास । तथाचाह श्रीमद्भागवते व्यासदेवः —

सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।
अदृश्यतात्यद्भुतरूपमुद्वहन् मध्ये सभायां न मृगं न मानुषम् ॥

एवं पञ्चवर्षवयस्कस्य ध्रुवस्य हिंस्रकपदसमाकीर्णेऽरण्ये रक्षां चकार । तस्य परमया भक्त्या सुतरां सन्तुष्टो भगवान् स्वकीयवैकुण्ठलोकादप्युपरि कञ्चिन्नूतनं लोकं तदर्थं निर्माय प्रदर्शितवान् भक्तजने किमपि स्नेहातिरेकम् ।

द्वापरे द्रौपदी यदा दु शासनेन केशेषु परिगृहीता कौरवसभाया विवस्त्रा कर्तुमभिलषिता, तदा तस्या एकान्तया भक्त्या तया—

गोविन्द ! द्वारिकावासिन् ! कृष्ण ! गोपीजनप्रिय !
कौरवै परिभूता मा कि न जानासि केशव !
कौरवार्णवमग्ना मामुद्धरस्व जनार्दन !
प्रपन्ना पाहि गोविन्द ! कुरुमध्येऽवसीदतीम् ॥ १।६८।४, ४२

इत्येवमभ्यर्थितो भगवान् तस्या व ।नरूपेण परिणतो भूत्वा लज्जा परिरक्ष्य दर्शितवान् भक्तिमर्यादा प्रचारितवाश्च द्रौपद्या पातिव्रत्यप्रधर्मकर्षम् ।

याज्ञसेन्या वच श्रुत्वा कृष्णोपह्वरितोऽभवत् ।
त्यक्त्वा शय्यासन पद्भ्या कृपालु कृपयाऽभ्यगात् ॥
कृष्ण च विष्णु च हरि नर च
त्राणाय विक्रोशति याज्ञसेनी ।
ततस्तु धर्मोऽन्तरितो महात्मा
समावृणो द्वै विविधै सुवस्त्रै ॥ १।६८।४३

भक्त प्रणयस्य हृदयानुरागरूपस्य स्नेहस्य च दृश्यते समुत्कर्ष वृन्दावन-लीलायाम् । तत्र हि परमया भक्त्या प्रणयादिना वा समाकृष्टो हरि सर्वेषामेव काम्य फल सम्पादयामास । बालोऽपि कृष्ण शिशुजनैरसाध्यानि कानिचित् कर्माणि सम्पाद्यात्मन ईश्वरता दर्शितवान् । अम्बरीषपृथुप्रभृतयो राजान प्रेम्णा भगवन्तमर्चयित्वाऽनायासेन त प्रापु । सुदामा केवलै पृथुकतण्डुलकणै, गजेन्द्र केवलेन पुष्पेण, सबरी च बदरीफलैरेव भगवन्त सन्तोष्य स्वीया स्वीयामभिलाषा पूरितवन्त, प्राप्तवन्तश्च तत्कृपया परम पदम् । एतत्सर्वं पर्यालोच्येद वक्तु शक्यते यत्सत्यमुक्त भगवता गीतायाम्—

पत्र पुष्प फल तोय यो मे भक्त्या प्रयच्छति ।
तदह भक्त्युपहृतमश्नामि प्रयतात्मन ॥

अनन्यया भक्त्या सतुष्टो भगवान् भक्तस्य सर्वविधा विपद वारयति मनोरथ च सर्वं पूरयति । तथाचोक्त श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लवम् महत्पद पुण्ययशो मुरारे ।
भवाम्बुधि र्वत्सपद पर पदम्, पद पद यद्विपदो न तेषाम् ॥ १०।१४।५८

भगवति समासक्तो भक्तो मुक्ति लब्ध्वा न च पुन जन्ममरणचक्रे चक्रमितो भवति । तथाचोक्तं श्रीमद्भागवते—

शृण्वन् गृणन् सस्मरयश्च चिंतयन् नामानि रूपाणि च मगलानि ते ।
क्रियासु यावच्चरणारविन्दयोराविष्टचेता न पुनर्भवाय ॥ १०।२।३३

# भक्तेर्वर्गीकरणम्

यद्यपि भक्ते वर्गीकरणविषये विदुषा भिन्न भिन्न मत विलोक्यते, तथापि प्रधानतया निम्नाङ्कित मतद्वय सर्वसाधारण प्रचलति।

(१) भक्तिस्तावद् द्विधा, गौणी पराभेदात्। गौणी पुनर्द्विधा—वैधी रागात्मिका च। वैधी अपि पुनर्नवधा विभज्यते। तथाहि श्रीमद्भागवते प्रह्लाद उत्तमाध्ययनमभिलक्ष्य दैत्यबालकानवोचत्—

श्रवण कीर्तन विष्णो स्मरण पादसेवनम्।
अर्चन वन्दन दास्य सख्यमात्मनिवेदनम्॥ ७।५।२३
इति पुसर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥ ५।२३,२४

तथाच गुरूपदेशाद्—विधिनिषेधानुकूल साधन कुर्वतो भक्तस्य हृदये प्रथम या भक्तिरुदेति सा वैधी भक्तिरुच्यते। ततो निरन्तरम् भगवच्चरणारविन्दविषयिणी रागात्मिका भक्तिरुदेति, यया भक्तहृदये आनन्दशान्तिसञ्चारो भवति। तस्य मनोमधुप प्रभुपादपद्ममकरन्दपानमत्त सर्वत्र प्रभुमेव पश्य न्नानन्दनिमग्नस्तिष्ठति। अस्यामवस्थायामेव भगवन्त श्रीकृष्णमुक्तवत्यो व्रज बाला रासलीलाया समये—

चित्त सुखेन भवतापहृत गृहेषु
यन्निर्विशत्युत करावपि गृह्यकृत्ये।
पादौ पद न चलतस्तवपादमूलात्
याम कथ व्रजमथो करवाम किम्वा॥ १०।२९।३४,३५

रागात्मिकाया भक्त्या भगवत्प्रेमविह्वलो भूत्वा भक्त उन्मत्तवन्नृत्यति, रोदिति, गायति हसति च। तथाचोक्तम्—

वाग् गद्गदा द्रवते यस्य चित्तम्
रुदत्यभीक्ष्ण हसति क्वचिच्च।
निर्लज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवन पुनाति॥ ११।१४।२४

एव गुरुशास्त्राज्ञानुसार वैधी भक्तिमभ्यस्यतो भक्तस्य हृदये सा रागात्मिका भक्तिरुदेति, यस्या भक्तहृदय सासारिकविषयेभ्य उपरत भूत्वा भगवति लीन भवति। एतत् परिपक्वदशया परिणाम परा भक्ति रस्ति। यस्याम् अहङ्कारदेहात्मभावौ नश्यत, सर्वात्मदृष्टिश्च जायते। तथा चोक्त श्रीशङ्कराचार्यपादै —

सम्पूर्णं जगदेव नन्दनवन सर्वेऽपि कल्पद्रुमा ,
वाच. वारि समस्तवारिनिवहा पुण्या समस्ता क्रिया ।
वाच प्राकृनसस्कृता श्रुतिगिरो वाराणसी मेदिनी
सर्वावस्थितिरस्य वस्तुविषया दृष्टे परे ब्रह्मणि ॥

(२) श्रीरूपगोस्वामिना भक्तिरसामृतसिन्धौ तु भक्ते त्रिधा भेद कृतोऽस्ति । साधन, भाव , प्रेमा च । साधनभक्ति पुन द्विविधा वैधी रागानुगाभेदात् । तथा चोक्तम्—

सा भक्ति साधन भाव प्रेमा चेति त्रिधोदिता ।
वैधी रागानुगा चेति सा द्विधा साधनाभिधा ॥

तत्र वैध्या स्वरूपम्—

यत्र रागानवाप्तत्वात्प्रवृत्तिरुपजायते ।
शासनेनैव शास्त्रस्य सा वैधी भक्तिरुच्यते ॥

यथा श्रीमद्भागवते—

तस्माद्भारत ! सर्वात्मा भगवान् हरिरीश्वर. ।
श्रोतव्य कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम् ॥ २।१।५

इय वैधी भक्तिरेकाङ्गाऽनेकाङ्गाभेदेन द्विधा भवति । तदुक्तम्-

सा भक्तिरेकमुख्याङ्गाश्रितानैकाङ्गिका थवा ।
स्ववासनानुसारेण निष्ठात सिद्धिकृद्भवेत् ॥

एकाङ्गा यथा-

श्रीविष्णो श्रवणे परीक्षिदभवद्वैयासकि कीर्तने
प्रह्लादः स्मरणे तदङ्घ्रिभजने लक्ष्मी पृथु पूजने ।
अक्रूरस्त्वभिवादने कपिपतिर्दास्येऽथ सख्येऽर्जुन
सर्वस्वात्मनिवेदने बलिरभूत्कृष्णाप्तिरेषा परम् ॥

अनेकाङ्गा यथाराज्ञोऽम्बरीस्य चरित्रे श्रीमद्भागवते—

स वै मन कृष्णपदारविन्दयो
वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुति चकाराच्युतसत्कथोदये ॥

अथ रागानुगा यथा—

विराजन्तीमभिव्यक्त व्रजवासिजनादिषु ।
रागात्मिकामनुसृता या सा रागनुगोच्यते ॥

सा च कामद्वेषभयस्नेहादिसम्बन्धादनेकधा भवति ।

यथाह श्रीमद्भागवते—

कामाद् द्वेषाद्भयात्स्नेहात्सम्बन्धादीश्वरे मन ।
आवेश्य तदघ हित्वा वहवस्तद्गतिं गता ॥
गोप्य कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपा ।
सम्बन्धाद्वृष्णय स्नेहाद् यूय भक्त्या वय विभो ॥ ७।१।२९

भावभक्तिश्च यथा—

प्रेम्णस्तु प्रथमावस्था भाव इत्यभिधीयते ।
सात्विका स्वल्पमात्रा स्युरत्राश्रुपुलकादय ॥

यथाह पद्मपुराणे—

ध्याय ध्याय भगवत पादाम्बुजयुग तदा ।
ईषद्विक्रियमाणात्मा सार्द्रदृष्टिरभूदसो ॥

प्रेमाभक्तिलक्षण तु

सम्यङ मसृणस्वान्तो ममत्वातिशयाङ्कित ।
भाव स एव सान्द्रात्मा बुधै प्रेमा निगद्यते ॥

यथाह नारदपञ्चरात्रे—

अनन्यममता विष्णौ ममता प्रेमसगता ।
भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदै ॥

तथाच श्रीमद्भागवते—

क्वचिद्रुदन्त्यच्युतचिन्तया क्वचित् हसन्ति नन्दति वदन्त्यलौकिका ।
नृत्यन्ति गायन्त्यनशीलयन्त्यज भवन्ति तुष्णी परमेत्य निर्वृता ॥

प्रेमाभक्तेरुदये एवं क्रमो भवति—

आदौ श्रद्धा तत साधुसगोऽथ भजनक्रिया ।
ततोऽनर्थनिवृत्ति स्यात्ततो निष्ठा रुचिस्तत ॥
अथासक्तिस्ततो भाव तत प्रेमाभ्युदञ्चति ।
साधकानामय प्रेम्ण प्रादुर्भावे भवेत्क्रम ॥

के भक्ते गुणा इति प्रश्ने प्राह रूपगोस्वामी—

क्लेशघ्नी शुभदा मोक्षलघुताकृत् सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षणी च सा ॥

स्कन्दपुराणे च—

अन्त शुद्धिर्बहि शुद्धि तप शान्त्यादयस्तथा ।
अमी गुणा प्रपद्यन्ते हरिसेवाभिकामिनम् ॥

एवञ्चात्मकल्याणकामिभि पुरुषैर्भगवत्स्वरूपसाक्षात्काररूपसायुज्य सारूप्य-सामीप्य-सालोक्यमुक्तिप्राप्तये तत्साधनत्वेनोपयोगिनी भगवद्भक्तिरवश्यमनुष्ठेया समादरणीया चेत्यल पल्लवितेन ।

# नवधा भक्तिः

आनन्दकन्दसच्चिदानन्दस्य परमकृपालो परमात्मन प्राप्तौ नवधाभक्ते प्राधान्यमभिप्रेत्य तत्प्रदश्यते ।

(१) तत्र भगवद्गुणगाथाया श्रवण नाम श्रवणभक्ति । सा च सर्व धर्म्मेभ्य श्रेष्ठा स्वीकृताऽस्ति । यतो हि भगवतो गुणानुवादश्रवणेन भगवत्प्राप्तिरवश्य जायते । तथाचोक्त श्रीमद्भागवते ६ स्कन्धे ७७ अध्याये—

श्रवण सर्वधर्मेभ्यो वरम्मन्ते तपोधना ।।
वैकुण्ठस्थो यत कृष्ण श्रवण द् यस्य लभ्यते ॥
सप्ताहश्रवणाल्लोके प्रारभ्यते निकटे हरि ।
अतो दोषनिकृत्यर्थमेतदेव हि साधनम् ॥ श्री०मा०मा०५।६२
प्रविष्ट कर्णरन्ध्रेण स्वाना भावसरोरुहम् ।
धुनोति शमल कृष्ण सलिलस्य यथा शरित् ॥
तस्मादीशकथा पुण्यां गोविन्दचरिताश्रिताम् ।
महत्पुण्यप्रदा यस्माच्छृणुष्व नृपसत्तम ॥

केवलया श्रवणभक्त्या भगवत्प्राप्तिर्भवतीतिविषये पुराणेषु बहूनि प्रमाणानि उपलभ्यन्ते । यथा महाराज परीक्षित् केवलेन श्रवणभक्तिप्रभावेणैव परमात्मान प्राप्तवान् । तद्यथा—

असारे ससारे विषयविषसगाकुलधिय क्षणार्द्धं क्षेमार्थे पिबत शुकगाथाऽतुलसुधाम् ।
किमर्थं व्यर्थं भो ! व्रजत कुपथे कुत्सितपथे परीक्षित्साक्षी यच्छ्रवणगतमुक्त्युक्ति कथन ॥

महापापी धुन्धुकारी अपि भगवतो गुणानुवादश्रवणप्रभावेणैव ससारसागरादुत्तीर्ण । महादुर्वृत्तोऽजामिलस्तु नारायणशब्दोच्चारणेनैव यमपाशाद्विमुक्त । तथाचोक्तम्—

अशेषसक्लेशशम विधत्ते गुणानुवादश्रवण मुरारे ।
कुत पुनस्तच्चरणारविन्दपरागसेवारतिरात्मलब्धा ॥

अतो मनुष्याणा कृते श्रवणादन्य कोऽपि नास्ति भगवत्प्राप्तिसाधक सुगम पन्था । तच्च श्रवण महापुरुषाणा सङ्गादेव भवति । तथाचोक्त श्रीमद्भागवते प्रथमस्कन्धे अष्टादशाध्याये—

तुलयामि लवेनापि न स्वर्गं ना पुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्याना किमुताशिष ॥

सता प्रसङ्गान्मम वीर्यसविदो भवन्ति हृत्कर्णरसायना कथा ।
तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनु क्रमिष्यति ॥ ३।२५।२४

अतएव श्रीमद्भगवद्गीतायामपि संसारोत्तरणे श्रवणस्य प्राशस्त्यमुक्तं भगवता श्रीकृष्णेन—

एतन्निर्विद्यमानानामिच्छतामकुतो भयम् ।
योगिना नृप निर्णीत हरेर्नामानुकीर्तनम् ॥
अन्ये त्वेवमजानन्त श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्यु श्रुतिपरायणा ॥

अतएव च सनकादयो महर्षयो भगवद्गुणानुवादश्रवणे एव स्वसमय यापयन्ति ।

( २ ) भगवच्चरित्रकीर्तन कीर्तनभक्ति कथ्यते । श्रीमद्भागवते यथा—

सकीर्त्यमानो भगवाननन्त श्रुतानुभावो व्यसन हि पुस. ।
प्रविश्य चित्त विधुनोत्यशेष यथा तमोऽर्कोऽभ्रमिवातिवात. ॥
कलेर्दोषनिधे रजनस्ति ह्येको महान् गुण ।
कीर्तनादेव कृष्णस्य मुक्तसङ्ग पर व्रजेत्—
इत्थ हरेर्भगवतो रुचिरावतार—
वीर्याणि बालचरितानि च शन्तमानि ।
अन्यत्र चेह च श्रुतानि गृणन् मनुष्यो
भक्ति परा परमहसगतौ लभेत ॥

श्रीमद्भगवद्गीताया कीर्तनासक्तो भक्त सर्वश्रेष्ठोऽभिहित —

य इम परम गुह्य मद्भक्तेष्वभिधास्यति ।
भक्ति मयि परा कृत्वा मामेवैष्यत्यसशय ॥
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तम ।
पिता न च मे तस्मादन्य प्रियतरो भुवि ॥

अतएव स्वभक्तिप्रचारक सर्वप्रियत्वेन स्वयमेव भगवताऽपि स्वीकृत श्रीमद्भागवते, तथाहि—

नाह तिष्ठामि वैकुण्ठे योगिना हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद ! ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुण ।
कीर्तनादेव कृष्णस्य मुक्तसग परम्व्रजेत् ॥

एतावताल अघनिर्हरणाय पुसा सकीर्तन भगवतो गुणकर्मनाम्नाम् ।
विक्रुश्य पुत्रमघवान् यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥
जिह्वा लब्ध्वापि यो विष्णु कीर्तनीय न कीर्तयेत् ।
लब्ध्वापि मोक्ष नि.श्रेणी स नारोहति दुर्मति ॥

( ३ ) भगवच्चरणारविन्दादिस्मरणात्मिका स्मरणभक्ति श्रीमद्भागवते यथा—

अविस्मृति कृष्णापदारविन्दयो
क्षिणोत्यभद्राणि शम तनोति च।
सत्वस्य शुद्धि परमात्मभक्तिम्
ज्ञान च विज्ञानविरागयुक्तम् ॥

अतएवामलात्मा परमहसो महामुनि भगवान् शुकदेवो राजान परीक्षितम्प्रति प्रावोचत्—

शृण्वन् गृणन् सस्मरयश्च चिन्तयन्,
नामानि रूपाणि च मगलानि ते।
क्रियासु यस्त्वच्चरणारविन्दयो-
राविष्टचेता न भवाय कल्पते॥
तन्न समादिशोपाय येन ते चरणाब्जयो।
स्मृतिर्यथान विमेदपि संसतामिह॥

विष्णुसहस्रनामस्तोत्रस्य आदावप्युक्तम्—

यस्य स्मरणमात्रेण जन्मससारबन्धनात्।
विमुच्यते नमस्तस्मै विष्णवे प्रभविष्णवे॥

श्रीमद्भगवद्गीताया च भगवान् श्रीकृष्णस्स्मरणभक्त्याऽऽत्मन सुलभत्व दर्शितवान्—

अनन्यचेता सतत यो मा स्मरति नित्यश।
तस्याऽह सुलभ पार्थ! नित्ययुक्तस्य योगिन॥

( ४ ) भगत्पादाब्जसेवनरूपा पादसेवनभक्ति—श्रीमद्भागवते यथा—

यत्पादसेवाभिरूचिस्तपस्विना-
मशेषजन्मोपचित मल धिय।
सद्य क्षिणोत्यन्वहमेधती सती
यथा पदाङ्गुष्ठविनि सृता सरित्॥

भगवतो रामस्य च चरणचिन्हरजसाङ्किता भूमि पश्यतो भरतस्य तन्मयता वर्णयन् भगवान् शिव भगवती पार्वती प्रति प्राह अध्यात्म रामायणे—

स तत्र वज्राङ्कुशवारिजाञ्चित-
ध्वजादिचिह्नानि पदानि सर्वत।
ददर्श रामस्य भुवोऽतिमङ्गला-
न्यचेष्टयत्पादरज सु सानुज॥

अहो सुधन्योऽहममूनि राम-
पादारविन्दाङ्कित — भूतलानि ।
पश्यामि यत्पादरजो विमृग्य
ब्रह्मादिदेवै मुनिभिश्च नित्यम् ॥

अहल्या भगवतो रामस्य चरणरजसा स्पृष्टा सती सचेतना भूत्वा भगवन्त श्रीराम स्तौति—

अहो कृतार्थास्मि जगन्निवास ! ते
पादाब्जसलग्नरज कणादहम् ।
स्पृशामि यत्पद्मजशङ्करादिभि-
र्विमृग्यते रन्धितमानसे सदा ॥

भगवच्चरणाश्रयाणा भक्ताना सर्वे दोषा दूरीभवन्ति, सर्वाश्चापत्तयो विलीयन्ते। गोपदमिवेमं ससारमुत्तरन्ति भक्ता । तद्यथा श्रीमद्भागवते—

समाश्रिता ये पदपल्लवप्लव
महत्पद पुण्ययशो मुरारे ।
भवाम्बुधिर्वत्सपद पर पद
पद पद यद्विपदो न तेषाम् ॥
त्वय्यम्बुजाक्षाखिलसत्वधाम्नि
समाधिनावेशितचेतसैके ।
त्वत्पादपोतेन महत्कृतेन
कुर्वन्ति गोवत्सपद भवाब्धिम् ॥
न नाकपृष्ठ न च सार्वभौम
न पारमेष्ठ्य न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भव वा
वाञ्छन्ति यत्पादरज प्रपन्ना ॥
ज्ञानवैराग्यमुक्तेन भक्तियोगेन योगिन ।
क्षेमाय पादमूल ते प्रविशन्त्यकुतो भयम् ॥
इत्यच्युताङ्घ्रिं भजतोऽनुवृत्या
भक्तिर्विरक्तिभगवत्प्रबोध ।
भवन्ति वै भागवतस्य राजन् !
तत परा शान्तिमुपैति साक्षात् ॥

( ५ ) पाषाणादिनिर्मिताया भगवतो मूर्ते पूजनम् अर्चनभक्ति अस्ति। सा च भगवत प्रीतिकारिणी विद्यते। भगवतोऽर्चनेन भक्ताना हृदये प्रसन्नता भवति यया हृदये भगवद्भावप्रीति शनै शनै उदेति। तथा हि श्रीमद्भागवते व्यासदेव —

श्रीविष्णोरर्चनं ये तु प्रकुर्वन्ति नरा भुवि ।
ते यान्ति शाश्वतं विष्णोरानन्दं परमं पदम् ॥

अर्चनभक्त्या स्वर्गापवर्गसमस्तसिद्धिलाभोऽप्यनायासेन भवति—

स्वर्गापवर्गयोः पुंसां रसानां भुवि मानसम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनम् ॥

श्रीमद्भगवद्गीतायामपि भगवान् श्रीकृष्णः—

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥
एवं क्रिया भोगपथे पुमान् वैदिकतान्त्रिके ।
अर्चयन्नुभयतः सिद्धिं प्राप्तो विन्दत्यभीक्षणम् ॥

( ६ ) वन्दनभक्तिः—भगवच्चरणारविन्दयोर्वन्दनं वन्दभक्तिरुच्यते, यथा भक्तेषु अहंकारस्यापनयनद्वारा भगवद्भावस्योदयो भवति ।

तथाचोक्तं श्रीमद्भागवते—

ध्येयं सदा परिभवघ्नमभीष्टदोहं
तीर्थास्पदं शिवविरिञ्चिनुतं शरण्यम् ।
भृत्यार्तिहं प्रणतपालभवाब्धिपोतं
वन्दे महापुरुष ! ते चरणारविन्दम् ॥

खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं यत् किञ्च भूतं प्रणमेदनन्यः ॥

यन्नामश्रुतिमात्रेण पुमान् भवति निर्मलः ।
तस्य तीर्थपदः किंवा दासानामवशिष्यते ॥

भगवत्प्रेमविह्वलस्याक्रूरस्य दशां वर्णयति भगवान् व्यासः—

रथात्तूर्णमवप्लुत्य सोऽक्रूरः स्नेहविह्वलः ।
पपात चरणोपान्ते दण्डवद्रामकृष्णयोः ॥

( श्रीमद्भगवते १० स्कन्धे ३८ अध्याय )

भीष्मस्तवराजे च—

एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥

(७) दास्यभक्तिः—अत्र भगवतो दासो भूत्वा तत्सेवाभ्यासद्वाराऽभिमानापनयनं भक्तेरुदयश्च भवति । तथाचोक्तं श्रीमद्भागवते—

न वासुदेवात्परमस्ति मङ्गलं
न वासुदेवात्परमस्ति पावनम् ।
न वासुदेवात्परमस्ति दैवतं
तं वासुदेवं प्रणमन्न सीदति ॥

(८) सख्यभक्तिः—अत्र भगवत्सखिरूपेण एकप्राणतायै हार्दिक-प्रयत्ने भक्तहृदये भगवति मधुरमयस्य प्रेम्णो विकाशो जायते । तथाहि श्रीमद्‌भागवते—

पतितः स्खलितश्चार्तः क्षुत्वा वा विवशो ब्रुवन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥

सख्यभक्तिप्राप्त्यै भगवत्प्रेमिभिः सखिभिः सह सङ्गः तेषां चरित्रस्याध्ययनमत्यावश्यकमस्ति । तथाहि श्रीमद्‌भागवते—

अहो भाग्यमहो भाग्यं नन्दगोपाब्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ॥
सख्युः प्रियस्य विप्रर्षेरङ्गसङ्गातिनिर्वृतः ।
प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥
किं चित्रमच्युत ! तवैतदशेष बन्धो दासेष्वनन्य शरणेषु यदात्म सत्वम् ।
यो रोचयेत् सह मृगैः स्वयमीश्वराणां श्रीमत्कीरीटतटपीडितपादपीठः ॥
अथोपवेश्य पर्यङ्के स्वयं सख्युः समर्हणम् ।
उपहृत्यावनिज्यास्य पादौ पादावनेजनीः ॥
अग्रहीच्छिरसा राजन् भगवाँल्लोकपावनः ।
व्यलिम्पद् दिव्यगन्धेन चन्दनागुरुकुङ्कुमैः ॥

(९) आत्मनिवेदनभक्तिः—आत्मनिवेदनद्वारा भक्तानां शारीरिकी वाचनिकी मानसिकी च सकला चेष्टा भगवद्‌भावमयी भवति, तदा भक्तानां हृदये भगवद्विषयेऽपूर्वदिव्यरागस्य विकास उदेति । तथाहि श्रीमद्‌भागवते—

मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ।
तदामृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥
स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥
मुकुन्द लिङ्गालयदर्शने दृशौ तद्‌भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् ।
घ्राणञ्च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥
पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने ।
कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥

भगवतः प्राप्तये कर्मयोगज्ञानादीनि सर्वाणि साधनानि श्रेष्ठानि सन्ति, किन्तु भक्तिस्तु सर्वोत्तमा गीताऽस्ति । नवविधासु आसु भक्तिषु एकविधया अपि भक्त्या भक्तः संसारसागरादुत्तर्तुं शक्नोति, किं पुनः यत्र प्रह्लाद इव नवधाभक्तिर्भवेत् । अतः परमात्मनो भक्तिर्विधेया । ययान्तेऽवश्यं कल्याणं भवेत् । अतएवोक्तं श्रीमद्‌भागवतमाहात्म्ये—

निखिलभुवनमध्ये निर्धनास्तेऽपि धन्या निवसति हृदि येषा श्रीहरेर्भक्तिरेका ।
हरिरपि निजलोक सर्वथातो विहाय प्रविशति हृदि तेषा सूत्रोपनद्ध ॥ ४।७३
कायेन वाचा मनसापि पातक नित्य प्रकुर्वन्ति शठा हठेन ये ।
परस्वपुष्टा मलिना दुराशया सप्ताहयज्ञेन कलौ पुनन्ति ते ॥
मर्थं कामइति योऽधिभहितस्त्रिवग ईक्षात्रयी न यदसौ विविधा च वार्ता ।
मन्ये तदेदखिल निगमस्य सत्य स्वात्मापण स्वसुहृद परमस्य पुस ॥

## पौराणिकानां कर्तव्यम्

यथा चार्वाके बौद्धे जैनेश्च हिन्दूधर्मस्य समूलमुन्मूलन कर्तु वेदाना निन्दा समारब्धाऽऽसीत्, तथैव कतिचिद् आधुनिका भारतीया अपि 'पुराणनि पोपकथा , उपेक्षणीयानि च' इति वदन्ति ।

यद्यपि पाश्चात्यसमालोचकेषु प्रसिद्धा समालोचका मिस्टर पार्जिटर' मिस्टरवेसेन्टस्मिथप्रभृतयो विद्वास पुराणानामनुपम महत्व मन्यन्ते । तथापि 'मिस मेयो' लिखितस्य "मदरइण्डिया" पुस्तकस्य प्रभावेण पाश्चात्ये जगति बहवो जना वेदान् पुराणानि चोपेक्षन्ते । स्वामिनो दयानन्दस्य सत्यार्थप्रकाशेन तु नवशिक्षिता भारतीया अपि पुराणानि सर्वथा उपेक्षन्ते, येन सनातनस्य हिन्दुधमस्य, सर्वकल्याणकारिण्या हिन्दुसस्कृते, अतिप्राचीनाया हिन्दुजातेश्चास्तित्वमापद्ग्रस्तमिव विलोक्यते ।

अतो यथा भगवत्पूज्यपादै श्रीस्वामिशकराचार्यमहोदये कुमारिलभट्ट-शवरस्वामिप्रभृतिभिश्च बहूनि ग्रन्थरत्नानि लिखित्वा चार्वाकबौद्धजैनाना पाखण्डमय प्रलाप खण्डयित्वा वेदस्य वैजयन्ती समस्ते देशे प्रासार्यत, यैरद्यत्वेऽपि हिन्दुधनस्य सस्कार अस्माक धमनीषु सञ्चरति, तथैव वास्तविकशास्त्ररहस्यमर्मज्ञै विद्वाद्भि पुराणनिन्दकानामनर्गलै प्रलापैर्दुष्य माणा भारतीयसस्कृतिम्, वैदिकधर्मम्, हिन्दुजाति च सरक्षितु पुराणनि-हितानि सर्वेषा हितकारीणि सर्वोपयोगीरि वैज्ञानिकतत्वानि सर्वेषा समक्षे उपस्थापनीयानि, येन वास्तविकस्थिति मवगत्य जना सन्मार्गे प्रवर्तेरन् विरमेयुश्चासन्मार्गात्, प्रसरेच्च सस्कृतसेवकाना महदौदार्यम् । समस्ते जगति सम्यक् शान्तिरक्षारद्वारा शाश्वत सुखं सर्वेषा समक्षे समुपतिष्ठेत ।

स्वस्ति प्रजाभ्य परिपालयन्ता न्यायेन मार्गेण मही महीशा ।
गोब्राह्मणेभ्य. शुभमस्तु नित्य लोका समस्ता सुखिनो भवन्तु ।
शान्ति' । शान्ति. ॥ शान्ति ॥।

# भुवनकोषविवरणम्

प्रत्येकब्रह्माण्डे चतुर्दश भुवनानि भवन्ति। तेषु भू, भुव, स्व, मह, जन, तप, सत्यञ्चेति सप्त लोका उपरि विद्यन्ते। अधस्ताच्च अतल वितल सुतल तलातल रसातल महातल पातालाख्या सप्त लोका सन्ति। उर्ध्वलोकेषु देवाना अधस्ताच्च असुराणा निवासो वर्तते। देवराजस्य इन्द्रस्य राजधानी स्वर्गलोके असुरराजस्य च राजधानी पाताललोके विद्यते। एषा चतुर्दशाना लोकानामनेके अन्तर्विभागा अपि वर्तन्ते। यथा किल भुवर्लोकस्य अन्तर्विभागा गन्धर्वलोकादय सन्ति तथैव भूलोकस्यापि मृत्यु-पितृ प्रेत नरकनामकाश्चत्वारो लोका अन्तर्विभागरूपेण वर्तन्ते। मृत्युलोकोऽय चतुर्दशाना भुवानाना केन्द्र रूपोऽस्ति। अत्रैव जीवा मातृगर्भाज जन्म लभन्ते। मृत्युलोके एव समुत्पद्य सर्वै जीवे स्वस्वशुभाशुभकर्मभोगानन्तर नूतनानि कर्माणि सगृह्यन्ते। यतो हि मृत्युलोकोऽय कर्मभूमि, अत्रैव स्वातन्त्र्येण विविधानि शुभाशुभकर्माणि विधातु सौकर्यं विद्यते। देवा असुराश्च स्वस्वलोकेभ्य अग्रे गन्तु न प्रभवन्ति, किन्तु अत्रैव मृत्युलोके जन्म आसाद्य भूय सत्कर्मानुष्ठानानुसारमुपरि लोकेषु गच्छन्ति। अस्मादेव कारणादत्र ब्रह्माण्डे मृत्युलोकस्य प्राधान्यमस्ति।

## भारतवर्षवैशिष्ट्यम्

भारतवर्षं हि मृत्युलोकस्य उत्तममङ्गमस्ति। उत्तमाङ्गत्वादेवात्र भारतवर्षे भाषा-शरीर सौन्दर्यादीना प्रकृतेश्चैतादृशी पूर्णता परिदृश्यते। अत्रानसूया सीता सावित्री दमयन्तीप्रभृतय पातिव्रत्यधर्मपरायणा स्त्रिय, ध्रुवप्रह्लादाद्या बालका, हरिश्चन्द्रयुधिष्ठिरादयो राजान, शिवि दधीचि-बलि कर्णप्रभृतयो दातार, वसिष्ठ विश्वामित्रादयस्तपस्विन, रामकृष्णादयोऽवतारा, याज्ञवल्क्य पतञ्जलिप्रभृतयो योगिन, मार्कण्डेय कपिलादयो मुनय, अत्रिभरद्वाजवामदेवादय ऋषय, व्यास वाल्मीकिप्रभृतय ग्रन्थप्रणेतार, गौतम-कणादादयो दार्शनिका। अनसूया–लोपामुद्रा–नर्मदादयस्तपस्विन्य, मदालसा–सुकन्या-समाना गृहिण्यश्च प्रादुर्भूयास्य भारतवर्षस्य महिमान समवर्धयन्। हिमालयत कन्याकुमारीपर्यन्तम्, कच्छत कटकपर्यन्त सर्वेषा हृदि एकैव भारतीया सस्कृति विकासते। आचारभाषादीनाभेदेऽपि सर्वे रामकृष्णादिक मन्यन्ते, जन्मान्तर स्वीकुर्वन्ति, गोरक्षा च कर्तुं चेष्टन्त एव।

आधुनिका पदार्थविद्यावेदिन वैज्ञानिका अपि भारतस्य प्राकृतिकी पूर्णता स्वीकुर्वन्ति, मन्यन्ते च यत् भारतवर्षसदृश पूर्णप्रकृतियुक्त प्रदेशो

नास्मिन्भूमण्डले क्वचिदस्ति। सर्वोन्नत सवसमृद्धिशाली विशालो नगाधिराजो हिमालयो भारतवर्षमेवालङ्करोति। सवतोधिकपुण्यशालिनी त्रिलोकपाविनी भव्या भगवती भागीरथी भारतवर्षे एव निभाल्यते, यस्या महिमान देशीया विदेशीयाश्च विद्वांसो मन्यन्ते। ब्राह्मण क्षत्रिय वैश्य शूद्राश्चत्वारो वर्णा अत्रैव वतन्ते। षण्णा ऋतूना यथाक्रममत्रैव प्रादुर्भावो भवति। श्वेत कृष्ण गौराङ्गा मानवाश्चात्र भारतवर्षे एव दृश्यन्ते। सर्वेषु देशेषु लब्धजन्मानो जीवा भारते एव प्राणान् धारयितु शक्नुवन्तीति भारतस्य प्रकृतिपूर्णता सुतरा सिध्यति। भारतीय धर्मविज्ञानम्, तत्वज्ञानम्, वेदा, पुराणानि, धर्मशास्त्राणि, दशनानि च अस्य सूक्ष्मप्रकृतिपूर्णताया वैज्ञानिकगम्भीरगवेष णायाश्च प्रत्यक्षप्रमाणभूतानि सन्ति। अतो हि भारतवर्षमिद स्वभावत मृत्युलोकस्योत्तमाङ्गभूतमित्यत्र नास्ति कश्चित् सदेह। यथा किल मस्तक ज्ञानेन्द्रियाणा केन्द्रस्थान तथैव मृत्युलोक सर्वेषा लोकाना श्रेष्ठतर केन्द्र विद्यते। तत्रापि अस्माक भारतवषम्, यत्र जन्म लब्धु देवा अपि वाञ्छन्ति। तथाहि श्री विष्णुपुराणे—

गायन्ति देवा किल गीतकानि धन्यास्तु ये भारतभूमिभागे।
स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषा सुरत्वात्॥

किञ्च पुण्याधिक्यादेव भारते जन्म लभते जीव इति तत्रैव स्पष्टमुद्घोषितम्। तथाहि—

अत्र जन्म सहस्राणां सहस्रैरपि सत्तम।
कदाचिल्लभते जन्तु मानुष्य पुण्यसचयात्॥
अत्रापि भारत श्रेष्ठ जम्बूद्वीपे महामुने।
यतो हि कर्मभूरेषा ततोऽन्या भोगभूमय॥

यद्यपि पुराणेषु भुवनकोशवर्णने भारतादन्यदेशानामपि वणन विद्यते, तथापि भगवतो लीलास्थल पुण्यतमा भारतभूमिरेवास्ति। अत्रैव समये समये प्राकृतमानव इवावतरति भगवान्, रक्षति वर्णाश्रमव्यवस्था पालयति च धर्मपथाध्वनीनान्। पवित्रतमेऽत्र भारत एव बद्रिकाश्रमतो रामेश्वरपर्यन्त द्वारिकात कामाक्षापयन्त पवित्राणि तीर्थानि पूज्यानि च सन्ति, यत्रत्या स्थावरजङ्गमा अपि पुण्यभाज पूततमा धन्यतमाश्च मन्यन्ते। अतएव भारतीया भारतभूमिमिमा स्नेहमयी मातरमिव सनत समाद्रियन्ते, पूजयन्ति स्तुवन्ति प्रत्यह प्रातरुत्थाय। पूर्वं प्रार्थयन्ते च—

समुद्रवसने देवि! पर्वतस्तनमण्डले!।
विष्णुपत्नि! नमस्तुभ्य पादस्पर्श क्षमस्व मे॥

अपि च श्रीमद्भागवते भारतवर्षे जन्मगृहीत्वा भगवत्सेवास्पृहा महत पुण्यस्य फलं मन्यन्ते देवाः—

अहो अमीषां किमकारिशोभन प्रसन्न एषा स्विदुतस्वयं हरि ।
येर्जन्मलब्ध नृषु भारताजिरे मुकुन्दसेवोपयिक स्पृहा हि न ॥ ५।१९।२१

●

## पुराणेषु अन्तर्विभाजनविमर्शः

पुराणानामन्तर्विभाजन भाग-खण्ड-अश स्कन्द-पाद-पर्व-सहिता-अध्यायेषु जातमस्ति । तथा भागाशखण्डेष्वपि अनेके अध्याया सन्ति । एव सर्वेषु पुराणेषु अध्यायास्तु सन्त्येव, किन्तु क्वचन भाग-खण्ड अशाभ्यन्तरे वतन्ते क्वचिच्च स्वतन्त्रा एव सन्ति ।

(१) ब्रह्मपुराण द्वयोर्भागयो विभक्तमस्ति—पूवभाग, उत्तरभागश्च । उभयत्र २४५ अध्याया, नारदीयपुराणमतेन १०००० मत्स्यपुराण मतेन च १३००० श्लोकाश्च सन्ति ।

(२) पद्मपुराणस्य विभाजन पञ्चसु खण्डेषु जातमस्ति (१) सृष्टिखण्डम् (२) भूमिखण्डम् (३) स्वगखण्डम् (४) पातालखण्डम् (५) उ त्तरखण्ड च । तत्र क्रमश ८२, १२५, ३९, ११३, २८२ सङ्कलनया ६४१ अध्याया ५५००० श्लोकाश्च विद्यन्ते ।

(३) विष्णुपुराण भागद्वये विभक्तमति पूर्वभाग, उत्तरभागश्च, किन्त्वि दानीमेतस्य केवल पूर्वभाग एवोपलभ्यते, य षट्सु अंशेषु विभक्तोऽस्ति । तत्र प्रथमेऽशे २२ द्वितीये १६ तृतीये १८ चतुर्थे २४ पञ्चमे ३८ षष्ठेऽशे च ८ सकलनया १२६ अध्याया सन्ति । इद पुराण २३००० सख्याक भवितुर्महति, किन्तु साप्रत सर्वं नोपलभ्यते अस्योत्तरभागो विष्णुधर्मोत्तर कथ्यते, तेन सख्या पूर्ति सम्भवति ।

(४) क–शिवपुराणस्य विभाजन सप्तसु सहितासु जातमस्ति (१) विद्येश्वर सहिता (२) रुद्रसहिता (३) शतरुद्रसहिता (४) कोटिरुद्रसहिता (५) उमासहिता (६) कैलाशसहिता (७) वायवीयसहिता च । तत्रापि द्वितीयाया रुद्रसहिताया पञ्च खण्डा सृष्टिखण्ड, सतीखण्ड, पार्वतीखण्ड, कुमारखण्डो युद्धखण्डश्च सन्ति, तथा सप्तम्या वायवीयसहिताया द्वौ भागौ स्त -पूर्वार्द्ध मुत्तरार्द्धञ्च । तत्र सप्तसु सहितासु क्रमश २५, १९७, (२०×४३×५५×२०×५९=१९७) ४२,४३,५७, २३, ७६ ( ३५×४१=७६ ) गणनया ४६४ अध्याया २४००० श्लोकाश्च सन्ति ।

(४) ख-वायुपुराण चतुर्षु पादेषु विभक्तमस्ति (१) प्रक्रियापाद (२) उपोद्घातपाद (३) अनुषङ्गपाद (४) उपसहारपादश्च । तेषु प्रथमे १६,

द्वितीये ७ ६४, तृतीये ६५ ९९, चतुर्थे च १००-११२ अध्याया सन्ति।

(५) क श्रीमद्भागवतम् १२ स्कन्नषु विभक्तमस्ति। तत्र क्रमश १९, १०, ३३, ३१, २६, १९, १५, २४, ९०, ३१, १३, गणनया ३३५ अध्याय १८००० श्लोकाश्च सन्ति।

(५) ख देवीभागवतम् १२ स्कन्धेषु विभक्तमस्ति। तत्रापि क्रमश २०, १२, ३०, २५, ३५, ३१, ४०, २४, ५०, १३, २४, १४ गणनया ३३२ अध्याया १८००० श्लोकाश्च सन्ति।

(६) नारदीयपुराणस्य विभाजन भागद्वये जातमस्ति पूर्वभाग, उत्तरभागश्च। तत्र पूर्वभागे चत्वार पादा १२५ अध्याया, उत्तरभागे च ८२ सकलनया २०७ अध्याया २५००० श्लोकाश्च सन्ति।

(७) माकण्डेयपुराण १३६ अध्यायेषु विभक्तमस्ति। एतस्य श्लोकसंख्या ९००० अस्ति, परमिदानी ६९०० श्लोका एव उपलभ्यते

(८) अग्निपुराणस्य विभाजन ३८३ अध्यायेषु जातमस्ति। तत्र नारदीयानुसार १५००० मत्स्यानुसार च १३००० श्लोका भवितुमर्हन्ति।

(९) भविष्यपुराण पञ्चसु पवसु विभक्त विद्यते। (१) ब्रह्मपर्व (२) वैष्णव पव (३) शैवपर्व (४) सौरपव (५) प्रतिसर्ग पर्व च। अत्र ६०५ अध्याया नारदीयानुसार १४००० मत्स्यानुसारञ्च १४५०० श्लोका भवतुमर्हन्ति।

(१०) ब्रह्मवैवर्तपुराण चतुषु खण्डेषु विभक्तमस्ति (१) ब्रह्मखण्ड (२) प्रकृतिखण्ड (३) गणेशखण्ड (४) श्रीकृष्णजन्मखण्डश्च। तत्रान्तिमे भागद्वय विद्यते पूर्वभाग, उत्तरभागश्च। अत्र क्रमश ३०, ५७, ४६, १३३ सङ्कलनया २६६ अध्याय १८००० श्लोकाश्च वर्तन्ते।

(११) लिङ्गपुराण द्वयोर्भागयो विभक्तमस्ति पूर्वभाग, उत्तरभागश्च। तत्र क्रमश १०८, ५५ गणनया १६३ अध्याया ११००० श्लोकाश्च सन्ति।

(१२) वाराहपुराणस्यापि विभाजन भागद्वये जातमस्ति पूर्वभाग, उत्तरभागश्च। अत्र २१८ अध्याया २४००० श्लोकाश्च सन्ति।

(१३) स्कन्दपुराण सप्तसु खण्डेषु विभक्तमस्ति (१) माहेश्वरखण्ड (२) वैष्णवखण्ड (३) ब्रह्मखण्ड (४) काशीखण्ड (५) अवन्तीखण्ड (६) नागरखण्ड (७) प्रभासखण्डश्च। तत्राप्यनेकेऽवान्तरखण्डा सन्ति। अत्र क्रमशः १७४, १५६, ८७, १००, ३८७, २७९, ४२१ सङ्कलनया १६७१ अध्यायाः नारदीयमतेन ८१००० श्लोकाश्च सन्ति, किन्तु मत्स्यपुराणानुसार ८११०२ श्लोका भवितुमर्हन्ति।

(१४) वामनपुराणे द्वौ भागौ स्त -पूर्वभाग, उत्तरभागाश्च। तत्रादौ चतस्र सहिता सन्ति—(१) माहेश्वरीसहिता (२) भागवतीसहिता (३) सौरीसहिता (४) गाणेश्वरी सहिता च। अत्र ९५ अध्याया १०००० श्लोकाश्च विद्यन्ते। अस्योत्तरभागो नेदानीमुपलभ्यते।

(१५) कूर्मपुराणे चतस्र सहिता सन्ति—(१) ब्राह्मीसहिता (२) भागवती सहिता (३) सौरी सहिता (४) वैष्णवी सहिता च। तत्र साम्प्रत केवल ब्राह्मी सहितामात्रमेवोपलभ्यते। यत्र भागद्वय वर्तते (१) पूर्वार्द्धम् (२) उत्तरार्द्धञ्च। अत्र पूर्वार्द्धे ५३ उत्तरार्द्धे च ४६ गणनया ९९ अध्याया ६००० श्लोकाश्च सन्ति। अत्र नारदीयपुराणानुसार १७००० मत्स्यपुराणानुसार च १८००० श्लोका भवितुमर्हन्ति।

(१६) मत्स्यपुराण २९० अध्यायेषु विभक्तमस्ति। तत्र १४००० श्लोका सन्ति, किन्तु नारदीयपुराणानुसार १५००० श्लोका भवितुमहन्ति।

(१७) गरुडपुराणस्य विभाजन खण्डद्वये जातमस्ति, पूर्वखण्ड, उत्तरखण्डश्च। तत्रोत्तरखण्डस्य प्रेतकल्प इत्यपि नामान्तरमस्ति, यत्र शरीरत्यागानन्तर परलोकगतना जीवाना प्रेतक्रियाया विवरण सविस्तर प्रतिपादितमस्ति। अत्र भागद्वये क्रमश २४०, ७८ सङ्कलनया ३२८ अध्याया सन्ति। अस्मिन् नारदीयपुराणानुसार १९००० मत्स्यपुराणानुसार च १८००० श्लोका भवितुमर्हन्ति।

(१८) ब्रह्माण्डपुराणस्य वायुपुराणवत् चतुर्षु पादेषु विभाजन जातमस्ति (१) प्रक्रियापाद (२) अनुषङ्गपाद (३) उपोद्धातपाद (४) उपसहारपादश्च। तत्र प्रथम पादद्वय पूवभाग उच्यते, तृतीयपादो मध्यभाग कथ्यते, चतुर्थपादश्चोत्तरभागो निगद्यते। ऐषु १६१ अध्याया सन्ति। एतत् पुराण नारदीयानुसार १२००० मत्स्यपुराणानुसार च १२२०० श्लोकसख्याक भवितुमहति

## पौराणिकशब्दविमर्शः

पुराणेषु वैदिकलौकिकोभयविधाना शब्दाना मिश्रण वर्तते। अथापि अधिकाशा शब्दा लौकिकव्याकरणनियमानुसार प्रयुक्ता सन्ति। कियन्त शब्दा लौकिकव्याकरणनियमविरुद्धा अपि स्वतन्त्रा प्रयुक्ता सन्ति, ये आर्षा इति कथयित्वा समाधीयते पौराणिके।

## पुराणेषु अपाणिनीयप्रयोगदर्शनम्

| | |
|---|---|
| (१) सत्य पर धीमहि | श्रीमद्भागवते १।१।१ |
| (२) पुत्रेतितन्मयतया तरवोऽभिनेदु | ,, ,, |

| | | |
|---|---|---|
| (३) गावो बहुगुणा ददु | ,, | ३।६।२५ |
| (४) यथा दारे प्रजावती | ,, | ३।१४।३८ |
| (५) न याचतोऽदाद् समयेन दायम् | ,, | ३।१।८ |
| (६) तयो निपतमानयो | ,, | ३।१६।३४ |
| (७) कुतोऽन्यथा स्याद्रमत. स्व आत्मन | ,, | ५।१९।५ |
| (८) निवेशयित्वा निजराज्य ईश्वर | ,, | १।१०।२ |
| (९) स्वराज्ये स्थाप्य षमजम् | ,, | ३।३।७६ |
| (१०) मस्तान् हुत कुहकराद्धम् | ,, | १।१५।२१ |
| (११) सत्राजित स्वतनयाम् | ,, | १०।५६।११ |
| (१२) नन्दालये सवलया वजती विरेजु | ,, | १०।५।११ |
| (१३) निशामय तदुत्पत्तिम् | मार्कण्डेयपुराणम् | ८१।१ |
| (१४) विशन्त्यो मद्विभूतय | ,, | ९०।३ |
| (१५) आयात च ण्डिका दृष्ट्वा | ,, | ८८।३ |
| (१६) आत्मनो वेदविद्या च ईश्वरेण | स्कन्दपुपाणे रे०ख० | १।१७ |
| (१७) सर्वानन्तफला प्रोक्ता | मत्स्यपुराणे | ६४।४ |
| (१८) मूर्खागमेन रक्षितानि | ,, | १५८।७९ |
| (१९) ॐकारमय गृह्य | ,, | १३८।६८ |
| (२०) पूर्ववद् गुरु ऋत्विग्भ्य | ,, | ६०।३ |
| (२१) देवाना मातरो दृष्ट्वा | ,, | ६४।७ |
| (२२) विशेषान् शूद्रराज्ञस्तु | ,, | ४७।२।४६ |
| (२३) तस्याग्रतो नृप स्नायात् | अग्निपुराणे | १८५।१३ |
| (२४) पूज्य देव चतुर्मुखम् | वामनपुराणे | ४९।३७ |
| (२५) महन्ति पापन्यपि नारदाशु | ,, | ६९।११ |
| (२६) कुण्डिन न प्रवेक्ष्यामि अहत्वा | ब्रह्मपुराणे | १९९।९ |
| (२७) आगता पतिना विना | शिवपुराणे रु०स० | २४।४९ |
| (२८) भारतेषु स्त्रिय पुस | कूर्मपुराणे | ४३।२१ |
| (२९) लोकान् प्रकल्पयित्वा तु | वायुपुराणे | ६।३४ |
| (३०) सद्भाव एवो मवते मयोक्त. | विष्णुपुराणे | २।१३।४४ |

एव पुराणेषु कुत्रापि छन्दोभङ्गभिया सन्धि, कुत्र च सन्ध्यभाव कुत्रचिद् विभक्तिपरिवर्तन लिङ्गव्यत्यय, आत्मनेपदस्थाने परस्मैपदप्रयोग, परस्मैपदस्थाने चात्मनेपदप्रयोग । परस्मैपदिभ्यो धातुभ्य शानच्प्रत्यय आत्मनेपदिभ्य. धातुभ्य शतृप्रत्यय । क्वचनस्वरादिभ्य धातुभ्यो भूतकाले अडाग्माभाव क्वचन व्यञ्जनादिभ्यो धातुभ्योऽडागम, निरुपसर्गकधातुभ्यो ल्यप्प्रत्यय । कुत्रचित् लोपमर्जक

धातुभ्यो ल्यवभाव । एव बहवोऽपाणिनीया प्रयोगा दृष्टिगोचरी भवन्ति। यान् कियन्तो लिपिकारा च तु हि—आदिपदानि प्रयुज्य शुद्ध कर्तुं प्रयतन्ते, किन्तु नेदमुचित प्रतिभाति, यतो हि व्यावहारिकसस्कृत-शब्दाना प्रयोगकर्तृणा पुराणाना कृते एते अपाणिनीया प्रयोग भूषणमेवास्ति न दूषणम् । तथाहि—

व्यावहारिकशब्दौघान् पुराणानि प्रयुञ्जते ।
अपाणिनीयप्रयोगस्तु भूषण न तु दूषणम् ॥

## पुराणेषु पारिभाषिकशब्दप्रयोगः

सर्वेषु शास्त्रेषु पारिभाषिकशब्दाना सन्निवेशो विद्यते, यो हि तस्य शास्त्रस्य नैजी विशेषता। एतदनुसारमेव पुराणेष्वपि पारिभाषिकशब्दाना प्रचुरमात्राया प्रयोगोऽस्ति । यथा-सर्ग–प्रलय मन्वन्तर–युग–कल्प पर-परार्द्ध सन्धि–सन्ध्यशादय शब्दा । व्याकरणनियमव्युत्पत्यनुसार लोकव्यवहारे सामान्यरूपेण योऽपि अथ सम्भवेत्, परन्तु पुराणेषु प्रयुक्तानामेषा शब्दाना स एवार्थोऽभिमतो भविष्यति, यो हि व्यासपरिभाषया निश्चितो भवेत् । अत पुराणानामनुशीलनसमये तेषा यथार्थेष्वर्थेषु अवश्य ध्यान प्रदेयमन्यथा वैपरीत्यभ्रमोऽनिवार्यतया सम्भवेत् ।

## पुराणशब्दस्य व्युत्पत्तिस्तदर्थनिरूपण च

(१) पुर्रात अग्रेगच्छतीति पुरा पुर अग्रगमनेइतिधातो औपदिक का प्रत्यये पुरा शब्दो निष्पद्यते । मेदिनीकोश वलेन स त्रिषु अर्थेषु प्रयुज्यते । अतीतकाले प्रबन्धे सङ्कटे च। तथाहि—स्यात् प्रबन्धे पुरातीते सङ्कटागमिके तथा। पुरापूर्वकादण् प्राणने इति धातो पचाद्यचि कृते पुराणशब्दो निष्पद्यते ।

(२) पुराभवमिति विग्रहे सायं चिरेति ट्यु प्रत्यये युवो रनाकौरिति सूत्रेण योरनादेशे अट्कुण्वाडीति सूत्रेण णत्वे कृते पुराण प्रोक्तेषु इति सूत्र निर्देशात् तुटोऽभावे पुराणशब्द सिध्यति ।

( ३ ) यद्वा पुरा=पुरातनम् अनीति = जीवयति बोधयतीति पुराण ग्रन्थविवेष । पुरापूर्वकात् अण प्राणने इति धातोरचि णत्वे च कृते पुराण-शब्द सिध्यति ।

(४) पुरापूर्वकणीञ् प्रापणे इति धातो औणादिके डप्रत्यये टिलोपे णत्वे च कृते पुराणशब्दो निष्पद्यते। अर्थात् पुरा+नी+ड इमे त्रयोऽवयवा मिलित्वा पुराणशब्दरूपेण परिणता भवन्ति ।

(५) महर्षिणा यास्काचार्येण स्वकीये निरुक्तग्रन्थे पुराणशब्दस्य निर्वचन कुर्वता प्रोक्तमस्ति यत् पुराण कस्मात्? पुरा नव भवति ( निरुक्त ३।९।२४ )

अर्थात् पुराण कस्मादुच्यते ? अतो यत् कदापि पूर्वं नव स्यात् निरुक्ते यास्काचार्यस्यैव प्रकारेण निवचनेन पुराणे नवीनताया भावो नास्ति, किन्तु पुराणशब्दस्यार्थं प्राचीनोऽस्ति।

यद्यपि पुराणशब्दस्य पर्यायवाचिन प्रत्न-प्रतन-पुरातन चिरतनादय शब्दा सति तथापि अत्र पुराशब्देन प्राचीनाख्यायिकादियुक्ता महर्षिव्यासद्वारा निर्मिता अष्टादश ग्रन्थविशेषा एव ज्ञायन्ते । यदि पुराण कश्चिद् नवीन कथयति तर्हि स एव कथयितुमुद्यतो भविष्यति, यस्य पूर्वोक्ताना व्युत्पत्तीना ज्ञान नास्ति । विचारशीलास्तु व्युत्पत्तिमात्रत एव पुराण प्राचीनतम ग्र थ विशेष मन्यन्ते । सस्कृतसाहित्यस्य सर्वे ग्र थकारा इममेवार्थं स्वीकुर्वन्ति तथा स्वय पुराणान्यपि अस्यैवार्थस्य मान्यता प्रददति । तथाहि मत्स्यपुराणम्—

पुरातनस्य कल्पस्य पुराणानि विदुर्बुधा । ५३।७२

वायुपुराणमपि प्राचीनकालतोऽद्यावधि जीवित साहित्यमेव पुराण मनुते—

यस्मात् पुरा ह्यनतीद पुराणं तेन कथ्यते ।
निरुक्तिमस्य यो वेद सर्वपापै प्रमुच्यते ।। १।२०३

पद्मपुराणानुसार प्राचीना परम्परा व्यक्तीकर्तुं समर्थं शास्त्रमेव पुराणमुच्यते—

पुरा परम्परा व्यक्ति पुराण तेन वै स्मृतम् ।। १।२।५४

ब्रह्माण्डपुराणे तु इतो भिन्नैव व्युत्पत्तिरुपलभ्यते—पुरा एतदभूत् अर्थात्—प्राचीनकाले ईदृगासीत्। अत एतत् पुराणमुच्यते—

यस्माद् पुरा ह्यभूच्चैतद् पुराण तेन तत् स्मृतम् । १।१।७३

एव विभिन्नेषु पुराणेषु कृताया व्युत्पत्तौ ध्यानप्रदानेन प्रतीयते, यत् पुराणस्य वर्ण्यविषया प्राचीनकालत सम्बद्धा सन्ति । अपि च पुराणशब्द-श्रवणमात्रेणैव व्यासकृतानामष्टादशाना पुराणग्रन्थाना सहसा स्मरण जायते । प्राचीनानि सन्त्यपि पुराणानि रचनावैचित्र्य वस्तुवैचित्र्याभ्या सदा अभिनवानि प्रतीयन्ते । एव सृष्टि प्रलय प्रसिद्धराजर्षि वशपरम्परा-मनुवर्णन विशिष्टमानवाना पावनचरित्राणा च वर्णन यस्मिन् ग्रन्थे विद्यते तत् पुराणमुच्यते[१] ।

समीक्षाचक्रवर्तिनो म० म० प० मधुसूदनौझामहोदयेनात्मन पुराणोत्पत्तिप्रसङ्गे विश्वसाहित्यस्येतिहास पुराण प्रोच्यते ।

---

१ सर्गश्च प्रतिसर्गश्च वशो मन्वन्तराणि च ।
वश्यानुचरितं चैव पुराण पञ्चलक्षणम् ।। ( वा० पु० ४।११)

## द्विविधधारापर्यालोचनम्

पुराणाना पर्यालोचनया प्रतीयते यत् प्राचीनकाले लोककल्याणार्थं शास्त्रसम्बन्धिन्यौ द्वे धारे प्रचलिते आस्ताम्—एका ऋषिधारा, द्वितीया च मुनिधारा। ऋषिभि वेद गृहीत्वा तस्य सुरक्षाया भारो गृहीत, तथा मुनिभि पुराणा स्वीकृत्य तस्य प्रवचनस्य प्रचारस्य प्रसारस्य च कार्यं कृतम्, यस्य सङ्केतोऽस्माभि मार्कण्डेयपुराणेऽवाप्यते । तदनुसार सर्गादौ अव्यक्तजन्मनो ब्रह्मणो मुखेभ्यो वेदस्य पुराणस्य चाविर्भावो जात । तेषु ब्रह्मणो मानसपुत्रा सप्तर्षयस्तस्माद्वेद गृहीतवन्त, तथा मानसा मुनय पुराण प्रचार स्वीकृतवन्त —

उत्पन्नमात्रस्य पुरा ब्रह्मणोऽव्यक्तजन्मन । पुराणमेतद् वेदाश्च मुखेभ्योऽनुविनि सृता ॥
वेदान् सप्तर्षयस्तस्माज्जगृहुस्तस्य मानसा । पुराण जगृहुश्चाद्या मनुयस्तस्य मानसा ॥

(मार्कण्डेयपुराणे ४५।२०, २१)

एवमृषिद्वारा गृहीता वेदधारा प्रारम्भतो यज्ञेषु तत्तद्देवान् निर्दिश्य हविषस्त्यागस्य महत्त्व प्रददति। तथा पुराणधाराया प्रमुख लक्ष्य लोकवृत्तस्यानुशीलनपूर्वक भक्तिद्वारा भगवत्प्राप्ते समुपदेशदानमस्ति।

## ऋषिमुनिशब्दयोः पार्थक्यविवेचनम्

ऋषिशब्दस्य व्युत्पत्तिर्भवति—ऋषति = प्राप्नोति सर्वान् मन्त्रार्थान् ऋषति ज्ञानेन ससारपार पश्यतीति वा ऋषि । तौदादिकाद् ऋषि गतौ धातोरौणादिकेन किप्रत्ययेन ऋषिशब्दो निष्पद्यते, यस्य सङ्कलितार्थो भवति विशिष्टज्ञानसम्पन्ना, ससारपारगनशीला वा व्यक्ति । एवम्प्रकारकस्यार्थस्य सङ्कृतो विभिन्नेषु पुराणेषु प्राप्यते[1]।

तथा वायुपुराणे ऋषिशब्दस्य चत्वारोऽर्था निर्दिष्टा सन्ति—गति (ज्ञान) श्रवण सत्य-तपस्या ब्रह्मद्वारा यस्या व्यक्तौ इमे चत्वारोऽर्था नियता कृता स्यु, सैव व्यक्ति भवति ऋषि[2] । मत्स्यपुराणेऽपि[3] ।

---

१ गत्यर्थादृषतेर्धातो र्नामनिवृत्तिरादित. ।
यस्मादृषिपरत्वेन महान्स्तस्मान्महर्षय. ॥ (वायुपुराणे ७।७४)
गत्यार्थादृषते र्धातोर्नामनिवृत्तिकारणम् ।
यस्मादेष स्वयम्भूतस्तस्माच्च ऋषिता मता ॥ (म० पु० ३४४।८३)

२ ऋषित्येष गतौ धातु श्रुतौ सत्ये तपस्यथ ।
एतत् सनियतस्तस्मिन् ब्राह्मणा स ऋषि स्मृत ॥ (वायुपुराणे ५९।७९)

३ ऋषिर्हिसा गतौ धातु विद्या सत्य तप श्रुतम् ।
एष सन्निचयो यस्माद् ब्रह्मणस्तु ततस्त्वृषि ॥ (मत्स्यपुराणे १४४।८१)

निरुक्तस्य व्याख्याकर्तु र्यास्काचार्यस्य मतानुसार ऋषिशब्दस्य व्युत्पत्तिलभ्योऽर्थो भवति तत्त्वसाक्षात्कारकर्ता व्यक्तिविशेष–ऋषि-र्दर्शनात् (२।११) तैत्तिरीयारण्यके ऋषिशब्दस्य व्याख्या कृतास्ति—दर्शनात् ह वै पृश्नीस्तप्यमानान् ब्रह्म स्वयम्भ्वानार्षत् ऋषयोऽभवन्, तद् ऋषीणामृषित्वम् (२।९) अर्थात् सृष्टयारम्भे तपस्यता ब्रह्मणो मानसपुत्राणा समीपे वेद स्वय प्रादुर्भूत । वेदस्यास्य प्रादुर्भावकारणादृषीणामृषित्वमस्ति । तप पूतोऽन्तर्ज्योति सम्पन्नो मन्त्रद्रष्टा तत्त्वदर्शी ऋषिरुच्यते, यस्य सकेत वायुपुराणमपि करोति[1] ।

ऋषधातु गतिर्हिंसयोरथयो प्रयुज्यते । अत ब्रह्मज्ञानसम्पन्नो विद्यासत्य तप परिपूतो वा ब्राह्मण ऋषिरुच्यते, स एव यदा निवृत्तिसमये बलेन बुद्ध्या वा परमेऽव्यक्ते प्रविशति तदा परर्मार्ष प्रोच्यते । एव गत्यर्थे प्रयुक्ताद् ऋषधातो निष्पन्न ऋषि सर्वजीर्वानिवृतिकारण भवति । अत एवास्य ऋषिता मन्यते । ब्रह्मणो मानसा परमैश्वर्यशालिन ऋषय स्वयमुत्पन्ना स्वनिवृत्तिवुद्धिद्वारा ते तस्मिन् परमे महति आश्रिता भवन्ति । अतस्ते परमतत्त्वज्ञानिनो महर्षय उच्यन्ते । तेषा परमैश्वयशालिना मानसा औरसा वा पुत्रा परमत्वाश्रयात् परर्षय प्रोच्यन्ते । तैरुत्पन्ना ऋषयो निगद्यन्ते । तत्पुत्राश्च ऋषीका प्रोक्ता, ये स्त्रीपुरुषसयोगजन्या जाता । परत्वकारणात् महत्त्वाश्रयाच्च एते ऋषीका कथ्यन्ते । एषामृषिपुत्रका ज्ञेया यतस्ते महत्त्व श्रुत्वा परिवर्तिनो जाता, अतस्ते श्रुतर्षय कथ्यन्ते । एव कोशेऽपि ऋषीणा सप्त भेदा अभिमता सन्ति—

(१) ब्रह्मर्षि, (२) देवर्षि, (३) महर्षि, (४) परमर्षि, (५) काण्डर्षि (६) श्रुतर्षि, (७) राजर्षिश्च । अर्थाद् राजर्षे श्रुतर्षि श्रेयान्, तत काण्डर्षि, तत परमर्षि, ततो महर्षिस्ततो देवर्षि, ततश्च ब्रह्मर्षि सवश्रेष्ठोऽभिमतोऽस्ति[2] ।

ब्रह्मर्षे स्थान देवर्षि राजर्ष्यपेक्षयोच्चतरमस्ति, यतोऽस्य चरम लक्ष्य ब्रह्मलोको विद्यते । देवर्षे स्थान ब्रह्मर्षेर्निम्नतर राजर्षेश्चोच्चरमस्ति । यतो देवर्षेश्चरम लक्ष्य देवलोको भवति ।

मत्स्यपुराणे पञ्चानामृषिजातीनामुल्लेखो विद्यते[3] । तदनुसार (१) अव्यक्तात्मा (२) महात्मा (३) अहङ्कारात्मा (४) भूतात्मा (५) इन्द्रिया

१ तस्मात्तु ऋषयस्ते वै भूतादौ तत्त्वदर्शिन । ( वायुपुराणे ५९।८४ )

२ सप्त ब्रह्मर्षि महर्षि-परमर्षय ।
काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमादवराः ॥ ( रत्नकोशे २ । ७ )

३ अव्यक्तात्मा महात्मा वाहङ्कारात्मा तथैव ।
भूतात्मा चेन्द्रियात्मा च तेषा तज्ज्ञानमुच्यते ॥
इत्येवमृषिजातिस्तु पञ्चधा नाम विश्रुता ॥ ( मत्स्यपुराण १४४।८९ )

त्मा चेति पञ्चप्रकारा ऋषयो भवन्ति। तेषु भृगुर्मरीचिरत्रिरङ्गिरा पुलस्त्य पुलह क्रतु मनुदक्ष वशिष्ठश्चेत्येमे दश ब्रह्मणो मानसपुत्रा ऋषित्व-महत्त्वाभ्या द्वाभ्या धर्माभ्या युक्ता सन्ति। अत इमे महषय कथ्यन्ते वायुपुराणे ब्रह्मणो मानसपुत्रा एव महर्षय उच्यन्ते—भृग्वादयो यथा सप्त कल्पे ह्यस्मिन् महषय (७।७०) गीताया भगवान् श्रीकृष्णश्चात्मान महर्षिषु भृगु निर्दिशन् महर्षीणा विश्लेषण कृतवान्—महर्षीणा भृगुरहम्। (१०।२५) एषामैश्वर्यशालिना महर्षीणा पुत्रा ऋषय शुक्र वृहस्पति कश्यप च्यवन उतथ्य वामदेवागस्त्य कौशिक कदम-वालखिल्य-विश्वश्रव शक्तिवर्द्धनाश्च ऋषय प्रोच्यन्ते, ये आत्मतपोबलेन ऋषित्व प्राप्नवन्त। एषामौरसा पुत्रा ऋषीका भरद्वाज दीर्घतम शरद्वत् पराशर शृङ्गी शङ्खनाद वैश्रवणादय ऋषिपुत्रा सन्ति। एते सत्यबलेन श्रृषित्वमलमन्त। एवप्रकारा अन्येऽपि ऋषयो वायुपुराणस्य ५९ अध्याये विवेचिता ज्ञेया।

एवविधानामृषीणा माध्यमेनैवापौरुषेयाणा वेदाना विश्वस्मिन् आवि र्भावो जात। सर्वप्रथमम् ऋषिभि वणमयो विग्रहवान् वेद आत्मन दिव्यै श्रोत्रै श्रुत। अतो वै वेदा श्रुतयोऽपि प्रोच्यन्ते। तदनन्तर तेषामृषीणा शिष्यै प्रशिष्यै तच्छिष्यैश्चाविच्छिन्नपरम्परयाऽद्यत्वेऽपि वेदाना प्रचार प्रसारश्च निरन्तर बोभूयते।

पुराणेषु ऋषीणा विधेयकर्मसम्बन्धे विशिष्टरूपेण किञ्चिन्न प्रतिपादित-मस्ति, प्रतीयते यत् प्रजापतेर्ब्रह्मणो मानसपुत्रा महर्षय एव ब्रह्मर्षय प्रोच्यन्ते। पुराणेषु ब्रह्मणो मानसपुत्रातिरिक्ताना कियता ब्रह्मर्षीणा चरित्रस्य प्रासङ्गिक उल्लेखो विद्यते। तेनेद ज्ञायते यद् ब्रह्मषयो वेदज्ञातारो ब्रह्मज्ञानिनस्तपो मूर्तयोऽलौकिकशक्तिसम्पन्नाश्च भवन्तिस्म ये स्वतपोबलेनासम्भवमपि कार्यं कदाचित् सम्भावयन्तिस्म।

के के देवर्षय सन्तीतिविषये विशिष्टरूपेणोल्लेखस्तु नास्ति, किन्तु वायुपुराणे धर्मपुत्रौ नर-नारायणौ, क्रतुपुत्रा बालखिल्या, पुलहपुत्र कर्दम, पर्वत, नारद, कश्यपपुत्रौ ब्रह्मवादिनौ असितदेवलौ च देवर्षय प्रोक्ता सन्ति[1]।

ब्रह्मर्षि देवर्षिभ्यो राजर्षे स्थान निम्नतरस्य स्तरस्य विद्यते। राजर्षिनाम्नाऽभिधानस्य कारण प्रतीयते, यद् ये राजान प्रजावर्गं

---

१ देवर्षी गर्मपुत्री तु नरनारायणावुभौ।
बालखिल्या क्रतो पुत्रा कदम पुलहस्य च॥
पर्वती नारदश्चैव कश्यपस्यात्मजावुभौ।
ऋष्यन्ति देवान् यस्मात्ते तस्माद्देवर्षय स्मृता॥ (वा० पु० ५९।९९)

रञ्जयन्त सर्वथा सत्यवादिनो धर्मात्मान परमार्थचिंतका भवन्तिस्म, त एव राजर्षय प्रोच्यन्तेस्म । पुराणानुसार जनक ययाति शान्तनु मान्धातृ सगरप्रभृतयो राजान स्वधर्माचरणद्वारा राजर्षय , कथ्यन्तेस्म ।

ब्रह्मणो दशसु मानसपुत्रेषु मरीचि अङ्गिरोऽत्रि-पुलस्त्य-पुलह-क्रतु वसिष्ठा एते सप्तर्षिरूपेणावतीर्णा आसन् । महभारतेऽपि एत एव मानसा सप्तर्षय प्रोक्ता सन्ति[1] ।

एते वेदज्ञातार प्रवृत्तिमार्गसञ्चालका प्रजापतिपदे प्रतिष्ठिता सन्ति । पुराणानुसार प्रतिमन्वन्तर भिन्ना भिन्ना सप्तर्षयो भवन्ति । वर्तमाने मन्वन्तरे वसिष्ठ कश्यप अत्रि-जमदग्नि-गौतम-विश्वामित्र भरद्वाजा सन्ति सप्तर्षय । वैदिकसाहित्ये सप्तर्षिशब्द सप्तर्षितारकपुञ्जस्य द्योतकरूपेणापि दृष्टिगोचरीभवति ।

## मुनिशब्दार्थः

मनु अवबोधने धातो मनेरुच्च ( ४।१२२ ) इत्यौणादिकसूत्रद्वारा इ प्रत्यये मकारोत्तरवर्तिनोऽकारस्य चोकारे कृते मुनिशब्दो निष्पद्यते । मनुते, जानाति य॰ स मुनि , मन्ता वेदशास्त्रतत्त्वार्थावगन्ता वा मुनि । एतस्य व्युत्पत्तिगम्योऽर्थो भवति—वेद-शास्त्रतत्त्वावगन्तृत्वम् । शङ्खस्मृतौ मुनिशब्दस्य स्वरूपमुक्तमस्ति, यद् य एकान्ते निवसति, मार्गे वा गच्छतो यस्य यत्र सन्ध्या जायते तत्रैव च यस्तिष्ठति स मुनिरुच्यते—[2]

महाभारते लिखितमस्ति यद्वने निवसतो यस्य ग्राम पश्चाद्भवति ग्रामे वा वसतो यस्य वन पश्चाद्भवति स मुनिर्ज्ञेय । अर्थात् पृष्टस्य वस्तुन उपयोग मकुर्वाणो यति मुनि निगद्यते[3] । वनपर्वणि मुने स्वरूपस्य सम्यग्विवेचन विद्यते । तत्र मुनौ तीव्रतपस्या तथा क्षमाशीलता अत्यावश्यकौ गुणौ प्रोक्तौ स्त ।

पुराणेषु अनेकत्र मुनि महामुनिशब्दयो प्रयोग उपलभ्यते । अमरसिंहेन मुने पर्यायो 'वाचयम' प्रोक्तोऽस्ति, यस्य शब्दार्थो मितभाषी भवति, किन्तु पुराणेषु ऋषि मुन्योर्लक्षणे किमपि विशिष्टमन्तर नहि प्रदर्शितमस्ति ।

---

१ मरीचिरङ्गिराश्चात्रि पुलस्त्य॰ पुलह॰ क्रतु ।
वसिष्ठ इति सप्तैते मनसा निर्मिता हि ते ॥ ( आ॰प॰ ६५।१० )

२ शून्यगारनिकेत॰ स्याद् यत्र साय गृही मुनि । ( शङ्खस्मृतौ ६।७ )

३ अरण्ये वशतो यस्य ग्रामो भवति पृष्ठत॰ ।
ग्रामे वा वसतोऽरण्यं स मुनि स्याज्जनाधिप ! ( सा॰ प॰ ६।१६ )

भृगु-भव-मरीचि अङ्गिर पुलस्त्य-पुलह-क्रतु अत्रि वसिष्ठा एते नव महात्मान ऋषि मुनिशब्दाभ्या विशेषिता सन्ति । ( वि० पु० १।७।२६ २७ ) एव विश्वामित्र कण्व नारदा अपि महर्षिमहामुनिभ्या द्वाभ्या शब्दाभ्या विशेषिता. सन्ति ।

ऋग्वेदे मुनीना शक्तेराचरणस्य च यद् वणनमुपलभ्यते तदनुसार मुनय परिव्राजका योगिनो वा वक्तु शक्यन्ते । एकत्र वेदे इन्द्रो मुनीना मित्र प्रोक्तोऽस्ति । जैन बौद्धवाङमयेऽपि मुनीना चरित्रचित्रण प्राप्यते, तत्र तेषामादशमय श्रेष्ठपुरुषरूपेण दशन जायते । जातकसाहित्येन गृहविहीनौ यतिमुनी श्रमण-नाम्ना अभिहितौ स्त । बुद्धोऽपि मुनिरभिमतो विद्यते, यतस्तस्याष्टदशसु नामसु एको मुनिशब्दोऽपि वतते[1] ।

गीताया दु खेषूपस्थितेषु अनुद्विग्नमना सुखेषु प्राप्तेषु विगताभिलाषो रागद्वेषभयक्रोधादिरहितश्च मुनि स्थिरबुद्धि प्रोक्तोऽस्ति[2] ।

भारद्वाजसहितायान्तु मन्त्रद्रष्टृत्व सलीनमानसत्व च ऋषि-मुन्योर्वैशिष्ट्य व्यक्तीकृतमास्ते[3] । एवमृषिषु मुनिषु च विभिन्ना विशेषता विद्यते । अतः ऋषिभि वेदपरम्पराया मुनिभिश्च पुराणपरम्पराया. प्रचालने न कापि भवितु-मर्हति विप्रतिपत्ति ।

## पुराणानां स्रोतांसि

पुराणना कानि सन्ति स्रोतासि येषामाधारेण भगवता व्यासदेवेन तेषा प्रणयन कृतमिति जिज्ञासायामिदमुच्यते यत् पुराणतत्त्ववेत्ता महर्षिर्व्यासश्च तुर्णामाख्यानोपाख्यानगाथाकल्पशुद्धीनामुपकरणानामाशयमादायाष्टादश महा पुराणानि विरचयाञ्चकार[4] ।

आख्यानोआख्याने—तत्र स्वय दृष्टार्थकथानकमाख्यानमुच्यते, परम्परया श्रुत कथानकमुपाख्यानमाख्यायते[5] ।

अर्थात्—यस्यार्थस्य साक्षात्कार स्वय वक्त्रा कृतोऽस्ति तदाख्यान निगद्यते, यस्य चार्थस्य कथन वक्त्रा अन्यव्यक्तिद्वारा श्रुतविद्य ते तदुपाख्यान

---

१ वि० पु० का भा० पृ० ६५ यथा पु० वि० पृ० ३०-४४ ।

२ दुखेष्वनुद्विग्नमना. सुखेषु विगतस्पृह ।
वीतरागभयक्रोध स्थिरधीर्मुनिरुच्यते ॥ ( गीता २।५५ )

३ ऋषयो मन्त्रद्रष्टारो मुनि सलीनमानस । ( भार० स० २।११ )

४ आख्यानैश्चाप्यूपाख्यानैर्गाथाभि कल्पशुद्धिभि. ।
पुराण सहिता चक्रे पुराणार्थविशारद. ॥ ( विष्णुपुराणे ३।६।१५ )

५ स्वयं दृष्टार्थकथन प्राहुराख्यानक बुधाः ।
श्रुतस्यार्थस्य कथनमुपाख्यान प्रचक्षते ॥ ( अष्टादशपुराणदर्पणे पृ० २५ )

कथ्यते। एतदनुसार मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य, सत्यव्रतस्य राज्ञो हरिश्चन्द्रस्य, धर्मिष्ठस्य राज्ञो ययातेर्धर्मराजयुधिष्ठिरस्य च कथानकस्य केवल परम्परा श्रुताऽस्ति तद् रामोपाख्यान हरिश्चन्द्रोपाख्यान ययात्युपाख्यान युधिष्ठिरोपाख्यान मुच्यते।

केषाञ्चिद् विदुषा मते भेदोऽय न दृष्टश्रुतकारणको विद्यते, अपितु महद्दल्पाकारको वर्तते। आकारे यत् कथानक महदस्ति तदाख्यानं निगद्यते, अपेक्षाकृत स्वल्पाकारक कथानकमुपाख्याननाम्ना प्रसिद्धमस्ति। यथा रामायणे रामस्य कथानक व्यापित्वादाख्यानमुच्यते। तदेशदेशवर्तित्वात् सुग्रीवस्य कथानकमुपाख्यान कथ्यते। रामोपाख्यान सुग्रीवोपाख्यानञ्च।

गाथा—अज्ञातकर्तृकाणा लोकप्रख्याताना केषाञ्चिन्महापुरुषाणां वैशिष्ट्यबोधकाना श्लोकाना सञ्ज्ञा गाथाऽस्ति। प्राचीनसाहित्येषु अनेकानि एवविधानि प्राचीनानि पद्यानि समुपलभ्यन्ते येषा कर्तृणा नामानि नोपलभ्यन्ते, यानि केषाञ्चिन्मान्यमहीपतीना प्रशंसायामसामान्ये शौर्ये दाने महिम्नि च प्रतिपादितानि सन्ति। ईदृशा अज्ञातकर्तृका परम्परया प्रचलिता लोकप्रख्याता श्लोका गाथापदेनोच्यन्ते। पुराणगाथासु केषाञ्चिन्महापुरुषाणा सार्वभौम जीवनदर्शन सक्षेपत एकस्मिन् द्वयोर्वा श्लोकयोरभिव्यक्तीकृतमस्ति। अधिकाशत इमा गाथा भारतीयसाहित्येऽतीतकालत सम्बद्धा सन्ति, तथैतिहासिकव्यक्तीना दानमहत्त्वाभिषेकादीना वर्णन कुर्वन्ति। यथा महाभारते[1] ययातिगाथा—

न जातु काम. कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥
यत् पृथीव्या ब्रीहियव हिरण्य पशव स्त्रिय।
एकस्यापि न पर्याप्त तस्मात्तृष्णा परित्यजेत्॥

वायुपुराणे[2] पितृगाथा यथा—

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन मृते वा वृषमुत्सृजेत्॥
गयां यास्यति य पुत्र स नस्त्राता भविष्यति।
गयाप्राप्त सुत दृष्ट्वा पितृणामुत्सवो भवेत्॥

मत्स्यपुराणे[3] मनुमत्स्यसवादप्रसङ्गे पितृगाथायामुक्तमस्ति, यत् पितृणा निरन्तरमियमिच्छा जायते यदस्माक कुले एव सत्पात्रवशजो

---

१ म० भा० आ० प० ८५।१२-१३। २ वा० पु० १०५।९-१०।

३ अपि स्यात स कुलेऽस्माक यो नो दद्याज्जलाञ्जलिम्।
नदीषु बहुतोयासु शीतलासु विशेषतः॥ ( म०पु० २०४।३ )

भवेद् योऽस्मभ्यं जलपरिपूर्णासु नदीषु जलाञ्जलीर्दद्यात् नित्य श्राद्ध वा कुर्यात्—

विष्णुपुराणे सप्तर्षिगाथा—

तत्रापि श्रूयते श्लोको गीत सप्तर्षिभि पुरा।
खट्वाङ्गेन समो नान्य कश्चिदुर्व्या भविष्यति॥
येन स्वर्गादिहागत्य मुहूर्त प्राप्य जीवितम्॥
त्रयोऽभिसहिता लोका बुद्धया दानेन चैव हि॥

कार्तवीर्यगाथा च—

नून न कार्तवीर्यस्य गति यास्यन्ति पार्थिवा[१]।
यज्ञैर्दानैस्तपोभिर्वा प्रश्रयेण दमेन च॥
कार्तवीर्यार्जुनो राजा यशस्वी बलवान् भुवि।
यस्य स्मरण भवेण गत नष्ट च लभ्यते॥

कल्पशुद्धिः

कल्पशुद्धिशब्दस्य तात्पर्यनिर्णये विदुषामस्ति परस्पर मतभेद। केचन कल्पशुद्धिशब्दस्थाने कल्पजोक्तिरिति पाठ मत्वा विभिन्नेषु कल्पेषूत्पद्यमानाना पदार्थाना विवरणमित्यर्थं कुर्वन्ति। श्रीधरस्वामिना तु कल्पशुद्धिरित्यस्याथ श्राद्धकल्प इति कृतोऽस्ति। समीक्षाचक्रवर्तिन प० मधुसूदन नोझा महोदस्य तथा म०स०प० गिरिधरचतुर्वेदस्य च[३] मते कल्पशुद्धिशब्देन धर्मशास्त्रस्य सर्वे विषया अभीष्टा सन्ति। कल्पस्य तात्पर्यं तौ वेदाङ्ग मन्येते, यत्र श्रौत गृह्य धर्मसूत्र सदाचार सस्कारा अन्तर्भवन्ति। शुद्धिपदेन तौ षड्विधा शुद्धि मन्येते, आत्मशुद्धि[?] तथा मन शुद्धि। मलशुद्धिः, स्पर्शशुद्धि, अन्नशुद्धि, एन शुद्धि।

तथा च भगवताव्यासवेदेन पुराणनिर्माणावसरप्रतिसङ्गे एषा चतुर्णामाख्यानोपाख्यानगाथाकल्पशुद्धीना मन्यते तथा सम्यगुपयोग कृतोऽस्ति। अत इमानि सन्ति पुराणाना स्रोतांसि उपकरणानि उपादानानि वेत्यत्र नास्तिकमपि सशीति[२]।

स्कन्दपुराणानुसार पुराणेषु पञ्चलक्षणातिरिक्तो यावान् विवेच्यो विषयो विद्यते तावान् आख्यानपदेन प्रसिद्धोऽस्ति।

पञ्चाङ्गानि पुराणस्य चाख्यानमितर स्मृतम्।[४]

किन्तु मत्स्यपुराणानुसार पञ्चलक्षणमेवाख्यानकमुच्यते—

पञ्चाङ्गानि पुराणेषु आख्यानकमिति स्मृतम्॥[५]

१ वि० पु० ४।४।१६-३१, १०।४। २ पुराणोत्पत्तिप्रसङ्ग पृ० ३१।
३ द्रष्टव्य—तस्य सुचिन्तितो लेख पुराणपत्रिकाया द्वि० व० पृ० १०६-१११।
४ स्क० पु० प्र० ख० ७७५। ५ म० पु० (५३।६४)

## पुराणेतिहाससाहित्यम्

पुराणसाहित्यस्येतिहासेन सहास्ति घनिष्ठ सम्बन्ध । प्राचीनग्रन्थेषु द्वयोर्नाम सम्मिलितरूपेणोपलभ्यते । छान्दोग्योपनिषदि इय कथाऽस्ति यत्—एकदा देवर्षिर्नारदो ब्रह्मविद्यामध्येतु सनत्कुमारपार्श्वे उपस्थितस्तदा तेन पृष्टो यद् भवता इत पूव किं किमधीतमस्ति ? तदुत्तरे स स्वाधीतविद्यासु इतिहासपुराणयोर्नाम गृहीत्वा तत् पञ्चम वेद प्रावोचद्–ऋग्वेद भगवोऽध्येमि यजुर्वेद सामवेदमथर्वणमितिहासपुराण पञ्चम वेदाना वेदम् ।[1] ४।१।६१

न्यायभाष्ये वात्स्यायनेनापि विषयभेदात् साहित्यस्य त्रयो भेदा स्वीकृता सन्ति । (१) यज्ञ., (२) लोकचरितम्, (३) व्यवहारव्यवस्थापन च । एषु यज्ञो मन्त्रब्राह्मणात्मकस्य वेदस्य विषय. । लोकचरितमितिहासपुराणस्य विषय । तथा व्यवहारव्यवस्थापनम्, मानवाना पुण्य-पापदीना निर्धारणञ्च धर्मशास्त्रस्यास्ति विषयः ।

वस्तुतो द्रष्टु प्रवक्तुश्च दृष्ट्या एषु भेदो नास्ति, यतो हि ये ऋषयो मन्त्राणा द्रष्टार सन्ति, त एव इतिहासपुराणस्य धर्मशास्त्रस्य द्रष्टारो वक्तारश्च सन्ति । किन्तु एषु विषयविवेचनदृष्ट्या पार्थक्य स्वीक्रियते ।

यास्काचार्येण स्वनिरुक्ते पुराणेतिहासयोर्निरुक्ति कृताऽस्ति यत् पुरा नवं भवति पुराणम् तथा इतिहासस्य व्युत्पत्ति इति + ह + आह = इतिहास ( इति = एव प्रकारम्, ह = निश्चयरूपेण आस = वर्तमानमासीत्) एव पुराण शब्दस्यार्थो भवति यत् प्राचीन सदपि नवीन स्यात् तत् पुराणम् तथा इतिहासस्यार्थो भवति य प्राचीने काले वास्तविकरूपेण घटितघटनाया सङ्केत करोति स भवतीतिहास । दुर्गाचार्योऽपि निरुक्तवृतौ निदानभूत 'इति ह एवमासीत्' इति य उच्यते स इतिहास ( २।३।१ ) ।

स्वामिशङ्कराचार्येण स्वकीये छान्दोग्योपनिषद्भाष्ये—उर्वशी हाप्सरा पुरुरवस चकमे (११।५।१।१) । इति शतपथब्राह्मणाधारेण उर्वशीपुरुरवसो सवादसूचकोऽश इतिहासो मन्यते—असद्वा इदमग्र आसीत्, इत्यनुसार सृष्टिप्रक्रियाघटितविवरण पुराण प्रोच्यते । इतिहास ईत्युर्वशीपुरुरवसो संवादादि॰, उर्वशी हाप्सरा इत्यादि ब्राह्मणमेव । पुराणम् असद्वा इदमग्र आसीत्, इत्यादि । (छा॰ उ॰ शा॰ भा॰ ७ । १ ) एव शङ्कराचाय्यमते प्राचीना उपलभ्यते । अस्यैव क्रमस्यानुकरण कुरुत लिङ्गपुराण मार्कण्डेय पुराणञ्च । एषु जीवात्म परमात्मनो र्व्यावहारिकभेदस्वीकारपूर्वक ब्रह्मणो ब्रह्माण्डपयन्त विवतस्यान्ते तत्रैव लयस्य च क्रमो विस्तरेण वर्णितोऽस्ति । द्वितीयोऽवशिष्ठ क्रमो—मुख्यतया नारदीय-ब्रह्मवैवर्त अग्नि विष्णु-मत्स्य शिव-कूर्म पद्मपुराणेषु

---

१ छा॰ उ॰ ७।१।१४ । ( बृ॰ आ॰ उ॰ २।४।१० )

अङ्कितोऽस्ति । अस्मिन् क्रमे जीवात्म परमात्मनो वास्तविकीमेकतामभिलक्ष्य परमात्मनो नामरूपोपाधिद्वारा ससारे प्रतिभासमानस्यान्तेविद्यानिवृतिपूर्वक पुन परमात्मन्येव लयस्य क्रमो दर्शितो विद्यते ।

तृतीयो वर्णसाम्यक्रम केवल देवीभागवते । तत्र वास्तविक पौर्वापय परित्यज्य केवल तुल्यवर्णसाम्यतया मद्वय मद्वयञ्चैव चैवेत्यादिना पुराणाना १८ नामानि गणितानि सन्ति । विशेषतो द्रष्टव्य श्रीमाधवाचायस्य पुराणदिग्दर्शनम्, धमविज्ञान वा स्वामिनो ज्ञानानन्दस्य ।

## पुराणां क्रमविमर्शः

पुराणाना गणनाप्रसङ्गे देवीभागवत विहाय सर्वेषु प्रथम पुराणे ब्रह्म पुराण विद्यते, अन्तिम पुराण च ब्रह्माण्डपुराणमस्ति । अस्येद तात्पयमस्ति यत् सृष्टयादौ ब्रह्मैव ब्रह्माण्डरूपेण। परिणमते । इद दृश्यमान नामरूपात्मक जगद् ब्रह्मातिरिक्त नास्ति । एतदनुसार भगवतो नारायणस्य नाभिकमला दाबिर्भूते पद्मे आसीनो ब्रह्मदेवो जगन्निर्मिमीते । यदि पुराणाना सृष्टिक्रम-विकासो वैज्ञानिकदृष्टया द्रष्टव्योऽस्ति र्तहि क्षीरसमुद्रे शेषशायिनो भगवतो विष्णो ध्यान विधेयम् । क्षीरसागरे शेषशय्याया शयानस्य भगवतो विष्णो ध्यान विधेयम् । क्षीरसागरे शेषशय्याया शयानस्य भगवतो विष्णो जगज्ज ननी लक्ष्मी पादौ सवाहयति तथा देवर्षिर्नारद· समीपे स्थित वीणा वादयन् त स्तौति । प्रलयकालसमाप्त्यनन्तर कल्पादौ यदा भगवति विष्णौ ससारस्य सिसृक्षा जायते तदा तन्नाभिकमलादेक कमल नि सरति । ततो ब्रह्मा प्रादुभवति । तत्र कमले उपविष्टश्चतुर्मुखो ब्रह्मा तप पूवक ससारस्य सृष्टि कतु मारभते । चित्रमिद ध्यात्वा पुराणाना क्रमे ध्यान प्रदेयम् । सम्प्रदा यविदा पुराणाममज्ञाना विपश्चिता मतेन पुराणाना क्रम साभिप्रायो विद्यते, नाकस्मिकोऽस्ति, प्रधानविषयदृष्टया क्रमनिर्देशस्यौचित्य सुसङ्गत च वतते । तथाहि—

(१) सर्वप्रथममिय जिज्ञासा जार्गात यदस्य दृश्यमानस्य ब्रह्माण्डस्य रचियता कोऽस्ति ? अस्योत्तर दातु प्रथम ब्रह्मपुराणमुपतिष्ठते, तेनेद सूच्यते यद् "ब्रह्म ब्रह्माऽभवत्स्वयम्" इति तैत्तरीयश्रुत्यनुसार ब्रह्मैव विधातृ-रूपेण सृष्टिरचयिताऽस्ति । अर्थात् स्थावर जङ्गमात्मकस्य दृश्यमानस्य जगतो निर्मातु ब्रह्मण स्वरूप प्रथम ब्रह्मपुराण वोधयितु प्रवृत्तम् । (२) ततो द्वितीय प्रश्न समुदेति यद् ब्रह्मा कुत उत्पन्न, ? अस्योतर पद्मपुराण प्रदातुमुपतिष्ठते यद् ब्रह्मा नारायणस्य नाभिकलादुत्पन्न । (३) तत तृतीया शङ्का समुदेति यत् तत् पद्म कुत उत्पन्नम् ? एतत्समा-धानायोपनिष्ठते तृतीय विष्णुपुराणम् । अत्र विष्णो नाभिकमलात् । पद्म-

मुत्पन्नं ततो ब्रह्मा प्रादुर्भूत् । एतद् विलोमक्रम न्निर्दिष्टमोस्ति । (४) एतदनन्तर जिज्ञासा जायते यद् ब्रह्मणो मूलसृष्टेर्ज्ञान कथ जातम् ! तदुत्तर, शिवपुराण प्रददाति यत् शिवात् (वेदात्) । प्रस्तुत "धाता यथापूवमकल्पयत्" इति ऋग्वेदमन्त्रानुसार वेदादेव सर्वविधा सृष्टि सजाता । अतएव भगवता मनुनाऽपि उल्लिखिमस्ति—वेदशब्देभ्य एवादौ पृथक् सस्थाश्च निर्ममे (म०स्मृ० १।२१) तत (५) लीनार्थगमक चिन्ह लिङ्गमित्यभिधीयते । महा-प्रलयदशाया विलीनपदार्थाना कारणात्मकतत्त्वानां पुन सघीकरण सर्गोऽस्ति । एतद्रहस्य पञ्चम लिङ्गपुराण वोधयाति । (६) मानवसृष्टौ जीवानामनेकविध विषमता एव जन्ममरणविधायिकाऽस्तीतीद रहस्य वोधयितुमौर्घ्व दैहिकक्रियाया विवेचक षष्ठ गरुडपुराणमुपतिष्ठते । (७) अप एव ससर्जादौ, आपो नारा इति प्रोक्ता, इत्याद्याधारेण नार जल ज्ञान वा ददातीति नारद इतिव्युत्पयनुसार नारदाता नारद उच्यते । इद तत्त्व वोधयितु सप्तम नारदीय पुराणमुपति, (८) ऐश्वयषडगुणसम्पन्नो दक्षिणशो भगवान् वामाशश्च भगवती अस्ति । इति रहस्य बोधयितुमष्टम भागवतपुराणमु-पतिष्ठ । यद् भगवतो भगवत्या वा इद भागवतमितिव्युत्पत्याधारेण पुरुषप्राध्यान्यात् श्रीमद्भागवतं तथा प्रकृतिप्राधान्याद् देवीभागवतनाम्ना प्रसिद्धमस्ति । (९) जन्ममरणचक्रे वद्धस्य जीवस्य कल्याण कथकार सम्भवति इत्यस्योत्तरमग्निपुराण ददाति । यज्ञादिभि सकामकर्मभि जीवस्यात्मकल्याण कतुमवसरो मिलति । अग्निरूपेण क्रियाशील वस्तु एव मूल प्रेरण प्रददातीति मतमुपदेष्टुमष्टमस्याग्निपुराणस्य आवश्यकता-ऽस्ति (१०) दशम स्कन्दपुराण भगवत शिवस्यावतारान् चरित्रं च वर्णयत्—विद्याकामस्तु गिरीशमित्यनुसार ब्रह्मविद्याप्राप्तये तदुपासनाया आदेश ददाति । (११) धर्मार्थकाममोक्षाणा चतुर्विधाना पुरुषार्थाना प्रधान साधनमारोग्यतैवास्ते तत्प्राप्तये 'आरोग्यं भास्करदिच्छेत्' इत्यनुसार भगवतो भास्करस्योपासना वोधयितुमेकादशं भविष्यपुराणमुपतिष्ठते (१२) मनुष्याणा सर्वविधविघ्नशमनार्थं गणेशादिदेवानामाराधनावोधनाय द्वादश ब्रह्मवैवर्तं पुराणमस्ति । (१३) सप्तम मार्कण्डेपुराण भगवत्या आद्याशक्ते महिम्न प्रकाशकमस्ति । इमे द्वेपुराणे वहुविधबाधाव्याप्ताना साधनाशक्तिशून्याना च कलिजीवाना—'कलौ चण्डीविनायकौ' इत्यनुसार दुर्गा गणेशयोरुपासनाया उपदेश दत्त (१४-१७) । चत्वारि वामन-वाराह-मत्स्य कूर्मपुराणानि प्रधान-तया भगवतोऽवतारस्य निरूपणं कुर्वन्ति तथा मुमुक्षुभ्य पुरुषेभ्य भगवतो विष्णो शरणागतेरुपदेश ददाति । एवमेषु प्राणिना कल्याणाय शिव सूर्य-गणेश दुर्गा-विष्णूनामेषा पञ्चाना देवानामुपासना निर्दिष्टाऽस्ति । (१८) अन्तेऽष्टादश ब्रह्माण्डपुराण समस्तां सृष्टिप्रक्रियामुपसहरत् स्वमूलतत्त्वे

